श्रीकृष्णाय नमः ।

# विषयानुक्रमः ।



## श्रीहरिरायविरचितो ब्रह्मवादः ।

विषयानुक्रमः ।

## श्रीहरिरायमहाप्रभुविरचित ब्रह्मवादानुवाद

श्रीकृष्णाय नमः ।

# ब्रह्मवादः ।



ब्रह्माभिन्नः प्रपञ्चश्चेदस्मद्दृग्विषयः कथम् ॥
ब्रह्मभिन्नः प्रपञ्चश्चेद् ब्रह्मविद्विषयः कथम् ॥ १ ॥
अतोभेदस्तथाभेदः शक्यते वदितुं कथम् ॥
इति चेन्न यथा ब्रह्म रूप्यते तत्प्रपञ्चयोः ॥ २ ॥
सर्वोपनिषदाऽभेदः स्पष्टमेव निरूपितः ॥
अतोस्मत्प्रत्ययो भ्रान्तो मायावृतविलोकनात् ॥ ३ ॥
उत्पन्ने ब्रह्मविज्ञाने सद्यस्तद्बाधदर्शनात् ॥
अवास्तवं रूपमेतद्वाचारब्धं विकारि यत् ॥ ४ ॥
ब्रह्मबोधेऽनृतस्यापि ब्रह्मत्वात्प्रत्ययस्तथा ॥
यावद्बोधं तु सत्यस्यासत्यस्य कथनं पुनः ॥ ५ ॥
पश्चात्सर्वस्य सर्वत्वं नानृतं किञ्चिदस्ति हि ॥
देहादयोनृतं तावत् यावत् कार्यतया मतिः ॥ ६ ॥
तन्निवृत्तौ पुनः सर्वं ब्रह्मरूपं न संशयः ॥
देहादिष्वापि भक्तानां वियुक्तानां हरेर्मतिः ॥ ७ ॥
कार्यं च तादृशं लीलानुकृतौ तेषु दृश्यते ॥
एवं शुद्धो ब्रह्मवादो यद्यायाद्धृदये सताम् ॥ ८ ॥

तदा मतान्तरासक्तिरपियायान्न चान्यथा ॥
मनान्तरेन्यथाबुद्धेः फलमप्यन्यथा भवेत् ॥ ९ ॥
मनोमनागपि नहि क्रियतां संशयास्पदम् ॥
हृदा सदा भावयन्तु ब्रह्मवादमलौकिकम् ॥१०॥
विचार्य वल्लभाचार्य प्रचार्यमतमार्यजाः ॥
विदार्यसंशयं कार्यमनार्यमतदूषणम् ॥११॥

इति श्रीब्रह्मवादः संपूर्णः ॥



श्रीगोपीजनवल्लभाय नमः ॥

गोस्वामिश्रीहरिरायजीमहाराजविरचितः

# ब्रह्मवादः ।

श्रीगोपालकृष्णभट्टविरचितविवरणाख्य-
व्याख्यासमलङ्कृतः ।



दुःखार्णवे निमग्नं मां कृपया करुणार्णवः ।
य उद्धार मदनमोहनं तं भजे सदा ॥ १ ॥

रससलिलयुतं श्रीकृष्णमेघस्वरूपं
कलिकलुषनिदाघातप्तभक्ताऽवनाय ।
स्वमतसुजलवृष्ट्या शामकं वादवह्ने-
रसत इह लसन्तं वल्लभं तं नतोऽस्मि ॥ २ ॥

नानावादेन रविणा हरिणा तिमिरं महत् ।
मायावादाख्यमखिलं नाशितं तं नमाम्यहम् ॥ ३ ॥

अज्ञानतिमिरान्धं मां स्वप्रतापार्कतेजसा ।
सनेत्रमकरोच्छ्रीमद्गोपेश्वरमहं भजे ॥ ४ ॥

गुरुचरणविभावसोः प्रकाशादपगतसंशयमण्डलान्धकारः ।
रसिकहरिकृतेरभेदगन्त्या विवरणमातनुते विनोदहेतुम् ॥ ५ ॥

गोष्ठीशालोपनामश्रीहरिकृष्णात्मजो मुदा ।
गोपालकृष्णः सुकविर्गोपेश्वरपदानुगः ॥ ६ ॥

अथ श्रीमद्गिरिवरधरणचरणपरिचरणमार्गमुकुलमार्त्तण्डायमान-हरिदासवर्य-श्रीमद्गोवर्द्धन-गिरिवरतादात्म्यं प्राप्नुवन्तो गोस्वामिनः श्रीमद्धरिरायचरणाः स्वीयानां परानभिभवपूर्वकं शुद्धाद्वैतपदवाच्यस्वमत-सिद्धान्तार्थावबोधनार्थं सोपपत्तिकमेतदेव वक्तुमेतदेव विचारमारभन्ते—

अथेदं विचार्यते ! ननु भक्तिमार्गे माहात्म्यज्ञानजननहेतुत-

अथेत्यादिना । अथ शब्दो मङ्गलार्थः । इदं बुद्धिस्थमग्रे वक्ष्यमाणं च बहुवाक्यसन्दर्भरूपं शास्त्रं विचार्यते, विचारविषयीक्रियत इत्यर्थः। तथाच शिष्यशिक्षायै ग्रन्थारम्भे अथशब्देन मङ्गलाचरणपूर्वकं निरुक्तमिदन्त्वावच्छिन्नं विचारविषयीक्रियत इति वाक्यार्थः । "ॐकारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा । कण्ठं भित्त्वा विनिष्क्रान्तौ तेन माङ्गलिकावुभा"वित्युक्तेः । विप्रतिपत्तिमुखेन स्वमतमुद्भावयन् पूर्वं तामेवाहुः । नन्वित्यादि । नन्विति विप्रतिपत्तिबोधकः । मृग्यते पुरुषोत्तमोऽनेन श्रवणादिनवकेनेति, श्रवणादिसाधनानुष्ठानात्मको मार्गः, न हि साधनपदेन पुष्टिमार्गानुपपत्तिः, अत्र फलसाधनयोरैक्यात् । प्रेम्णः सर्वत्रैवानुस्यूतत्वात्, तदग्रे वक्ष्यते । भक्तिरेव मार्गो भक्तिमार्गस्तस्मिन् भक्तिरसमार्ग इत्यर्थः । विभावानुभावव्यभिचारिसात्त्विकादिभिरनुनीयमानस्य माहात्म्यज्ञानपूर्वकस्य स्नेहस्य रसत्वाद्भक्तेरसत्वम् । अन्यस्नेहव्यवच्छेदार्थं माहात्म्यज्ञानपदम् । "माहात्म्यज्ञानपूर्वस्तु सुदृढः सर्वतोऽधिकः । स्नेहो भक्तिरिति प्रोक्तस्तया मुक्तिर्न चान्यथेति" नारदपञ्चरात्रोक्तेः । "सा परानुरक्तिरीश्वरे" इति शाण्डिल्यसूत्राच्च । "फलाभिसन्धिरहिता परा" अस्य विभावादयस्तु ग्रन्थान्तरे(१) द्रष्टव्याः, ग्रन्थविस्तरभिया न लिख्यन्ते । अत्र भक्तिरसोऽन्यरसानामुपलक्षकः । तत्रापि शृङ्गाररसस्याभ्यर्हितत्वेन तस्यैव स्वाभीष्टत्वं ध्वनयति । तेन अन्ये तु तदन्तर्गता एव रसाः, तेषां तदन्तर्गतत्वेनैव रसत्वात्, अन्यथा "रसꣳ ह्येवायं लब्ध्वाऽऽनन्दी भवती"त्यादिश्रुतौ रसप्राप्तेरानन्दफलकत्वोक्त्या भयानकादौ तदभावाद्रसत्वमेव न स्यात् । तथा सति, "रसो वै स" इतिश्रुत्या, "सर्वरस" इति श्रुत्या च शृङ्गाररसरूपपुरुषोत्तमविषयकज्ञानपूर्वकस्नेहविषयकोऽयं मार्ग इति भावः । तत्रापि मार्गो, न सरणिः । राजमार्गे, यथा गमनसौकर्यं चौरादिभयाभावस्तद्वदत्यन्तायाससाध्यानां शमदमादिसाधनानामत्राप्रयोजकत्वेन अनायासेन तत् सूचितम् । पतनभयाभावोऽपि सूचितः । "तथा न ते माधव तावकाः क्वचिद् भ्रश्यन्ति मार्गात् त्वयि बद्धसौहृदाः । त्वयाऽभिगुप्ता विचरन्ति निर्भया विनायकानीकपमूर्द्धसु प्रभो" इति दशमस्कन्धे गर्भस्तुतौ, "यानास्थाय नरो राजन् न प्रमाद्येत कर्हिचित् । धावन्निमील्य वा नेत्रे न स्खलेन्न पतेदिह"त्येकादशस्कन्धद्वितीयाध्याये चोक्तेः । अत एवाचा-

(१) स्वकृतसुधार्णवे ।

र्यचरणाः, "अत्रापि वेदनिन्दायाधर्मकरणात्तथा । नरके न भवेत् पातः किन्तु हीनेषु जायते" इत्याहुः । दुःखासम्भिन्नसुखरूपत्वं प्रथमतः अवधिपर्य्यन्तमिति राद्धान्तः । भक्तिशब्दस्य यौगिकार्थस्तु—भज़सेवायामिति धातोर्भावे क्तिन् प्रत्यये कृते भक्तिरिति भवति, भावश्च क्रियासामान्यम्, प्रकृतिप्रत्ययौ सहार्थं ब्रूतस्तयोस्तु प्रत्ययः प्राधान्येनेति वैयाकरणनियमाद् धात्वर्थव्यङ्ग्या या प्रधानभूता क्रिया तत्र पर्यवस्यति । प्रधानभूता च क्रिया मानस्येव । "अन्यत्रमना अभूवं नाऽश्रृणवम्, अन्यत्रमना अभूवं नाऽपश्यमिति" वाजसनेयश्रुतौ मनसः प्राधान्यश्रवणेन तत्क्रियाया एव प्राधान्यस्यौचित्यात् । तथाच सेवाभिव्यङ्ग्या प्रेमरूपमानसीसेवा भक्तिरिति तत्र योगरूढः सिद्ध्यति । तथा श्रवणादिनवकेऽपि पारिभाषिकः, "श्रवणं कीर्त्तनं विष्णोः स्मरणं पादसेवनम् । अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम् ॥ इति पुंसाऽर्पिता विष्णौ भक्तिश्चेन्नवलक्षणा" इति सप्तमस्कन्धे प्रह्लादवाक्यात् । अन्ये तु, उपासनायामपि भक्तिशब्दं प्रयुञ्जते । नैयायिकास्तु, "आराध्यत्वेन ज्ञानं भक्ति"रित्याहुः । श्रीमत्कपिलदेवैस्तु, श्रवणादिकनवकस्य सात्त्विकादिभेदेन त्रैविध्युक्तम् । पुनश्च मिश्रितभेदैनैकैकस्य त्रिविधस्य त्रैविध्यं नव भवन्ति । तथाच नवकस्यैव नवनवभेदैरेकाशीतिप्रकारा सगुणा भक्तिरुक्ता, राद्धान्तिता तु, "अनिमित्ता भागवती भक्तिः सिद्धेर्गरीयसी । जरयत्याशु या कोशं निगीर्णमनलो यथा" इति । अनिमित्तत्वकोशजारणत्वाभ्यां स्वरूपकार्यलक्षणाभ्यां गरीसी निर्गुणोक्ता । सा च मानसीसेवारूपा नारदपञ्चरात्रोक्ता शाण्डिल्यसूत्रोक्ता योगरूढेन भक्तिशब्देन प्रासाऽत्र विवक्षितेति निष्कर्षः । अत एव, "चेतस्तत्प्रवणं सेवा मानसी सा परा मते"ति श्रीमदाऽऽचार्यचरणाः । "भक्तिरस्य भजनं तदिहामुत्र फलभोगनैराश्येन तस्मिन् मनःकल्पनम्", "परो हि योगो मनसः समाधिरिति" श्रुतिपुराणोक्तेः । तथाच तादृशेऽस्मिन् मार्गे माहात्म्यज्ञानजननहेतुतया आनुकूल्येन उक्तः । महान् आत्मा शरीरमस्येति महात्मा ब्रह्म । 'बृहत्वाद् ब्रह्म उच्यते' इति वाक्यात्, महात्मनो भावो माहात्म्यम्, माहात्म्यस्य ज्ञानं माहात्म्यज्ञानम् । माहात्मनो ब्रह्मणो महिमज्ञानमिति यावत् । तस्य जननं समुद्भवः, तस्मिन् हेतुः, तस्य भावो हेतुता, तया कारणीभूतयेत्यर्थः । माहात्म्यज्ञानरूपस्यैव ब्रह्मज्ञानस्य भक्तेः पूर्ववर्त्तित्वान्नियतपूर्ववर्त्तित्वाद्धेतोः । "कारणाभावेन कार्याभाव" इति न्यायेन भक्तिविषयात्मकस्य भगवत्स्वरूपस्यैव ज्ञानाभावेन भक्तेरेवानु-

-याऽऽनुकूल्येनोक्तः कोऽसौ ब्रह्मवादः ? ।

उच्यते, एकमेवाद्वितीयं ब्रह्म, पुरुष एवेद॑ꣳ सर्वम्, ऐतदा-

---

पपचेः । आनुकूल्यनेति । अनुकूलस्य भाव आनुकूल्यं, जनकत्वम्, तेन भक्तिजनकत्वेन इत्यर्थः । यतो हेतुत्वमत एवानुकूलत्वम् । यद्वा अनुकूलत्वं सहकारिभावः । तथाच हेतुतया आनुकूल्येन चोक्त इत्यर्थः । अनुक्तोऽपि चः समुच्चयं वक्ति । विनाऽपि चं समुच्चयो भवतीति महाभाष्यप्रामाण्यात् । एवञ्च भक्तौ भगवतो ज्ञानस्याऽऽवश्यकता माहात्म्यज्ञानाय, माहात्म्यज्ञानस्य च प्रेमदार्ढ्याय । ज्ञानञ्च "जन्माद्यस्य यतः," "यतो वा इमानि," "सत्यं ज्ञानमनन्तं ब्रह्मे"त्यादिकार्यस्वरूपलक्षणाभ्यामुक्तं भवति । तत्र माहात्म्यं मनसाप्याकलयितुमशक्यरचनस्य जगतोऽनायासेनोत्पत्तिस्थितिभङ्गकरणं, लिप्तत्वालिप्तत्वं, भोक्तृत्वाभोक्तृत्वं, कर्तृत्वाकर्तृत्वम्, "अपाणिपादो जवनो ग्रहीते-" त्यादिविरुद्धधर्माश्रयत्वं वा; तेन भक्तेर्ज्ञानस्य उपजीव्योपजीवकभावः, कार्यकारणरूपो वा सम्बन्धः सिद्ध्यति । अतस्तद्धेतुत्वं तत्सहकारित्वं चेति भावः । एतादृशोऽयं भक्तिमार्गे ब्रह्मवादः सिद्ध्यति । स च, कोऽसौ ब्रह्मवाद इति ॥ तादृशोऽश्रुतपूर्वोऽयं क इत्यर्थः ।

किञ्च तत्र का वा युक्तिः, किं प्रमाणं, कीदृशं च तत्स्वरूपमित्यत आहुः । उच्यते इति । एतत् सर्वं सङ्कलीकृत्य एव अस्माभिः कथ्यत इत्यर्थः । तदेव दर्शयन्ति एकमेवेत्यारभ्य, तात्पर्यरूप इत्यन्तेन ।

एकमेवाद्वितीयमिति । सजातीयविजातीयस्वगतभेदवर्जितमित्यर्थः । तेन, एकमेवाद्वितीयमिति न पौनरुक्त्यम् । सजातीया जीवाः, विजातीया जडाः, स्वगता अन्तर्यामिणः । एकपदेन सजातीयभेदनिरासः, एवपदेन विजातीयस्य, अद्वयपदेन स्वगतानां जीवानाम् । सजातीयत्वन्तु, 'एकत्वे सत्यऽनेकानुगतत्वम्' जातिरिति जातिलक्षणाद् अनेका जीवाः, तदनुगता चित्स्वरूपा जातिः, तद्रूपतया साजात्यं ब्रह्मणः । तेन चित्साजात्येन ब्रह्मणो जीवैः साजात्यम् "यथा सुदीप्तात् पावकाद् विस्फुलिङ्गाः सहस्रशः प्रभवन्ते सरूपा" इति मुण्डकश्रुतौ सरूपपदाद्योतनत्वनित्यत्वादिना सारूप्यात् तादृशसजातीयभेदवर्जितमेकमित्यर्थः । जडानां विजातीयत्वं च जडत्वानित्यत्वादिना । अन्तर्यामिणः स्वगतत्वञ्च प्रकटसच्चिदानन्दरूपत्वेऽपि परिच्छिन्नत्वप्रतिनियतकार्यकर्तृत्वादिना ज्ञेयम् । सजातीयद्वैतञ्च खण्डमुण्डगोव्यक्त्योरिव, विजातीयद्वैतं च

घटपटयोरिव ज्ञेयम् । कुसुमेषु तरोरनुसीवनेऽपि कुसुमरूपत्वाभावात्, सच्चिदानन्दरूपे भगवति त्रितयनिरूपितद्वैतराहित्येन, चिद्रूपेण जीवे, सद्रूपेण जडे, प्रकटानन्दरूपेणान्तर्यामिणीत्येवं त्रिष्वप्यनुस्यूतत्वात् । अत एव, "सजातीयविजातीयस्वगतद्वैतवर्जित"मिति श्रीमदाचार्यचरणाः । एवं कारणदशायां स्थितस्य ब्रह्मणोऽभेदप्रतिपादिकां श्रुतिमुक्त्वा कार्यदशायां स्थितस्य तत्प्रतिपादिकामाहुः—"पुरुष एवेदँ सर्वँ"मिति । एषा तैत्तिरीयोपनिषदि सहस्रशीर्षाऽनुवाके । अग्रे, "यद्भूतं यच्च भाव्यमिति" । तयोरयमर्थः पुरुषः पुरुषोत्तमः, 'उत्तमः पुरुषस्त्वन्य' इति वाक्यात् । इदँ सर्वं यद्भूतं यच्च भाव्यं, भूतत्वेन भावित्वेन च व्यवह्रियमाणम् इदं घटपटात्मकं नामरूपेण भिन्नतया परिदृश्यमानपि सर्वं जगत् पुरुष एव । एतस्मिन्नुपादानकरणत्वेन पुरुषोत्तमस्यैवानुस्यूतत्वात् पुरुषोत्तम एव, नाऽन्य इत्यर्थः । एवकारस्य अन्यान्यव्यवच्छेदार्थकत्वात् । यतो, "जन्माद्यस्य यतः," "यतो वा इमानि," "तत्तु समन्वयादि"त्यादिश्रुतिसूत्रेषु पञ्चमी समवायिकारणमेव वक्ति, "जनिकर्त्तुः प्रकृति"रिति पाणिनीयसूत्रात्, तदेतत्, "तत्तु समन्वयादित्यादि"सूत्रभाष्ये स्फुटं निरूपितं श्रीमदाचार्यचरणैरिति नात्र वितन्यते । द्वितीयामपि तामाह—"ऐतदात्म्यमिदं सर्व"मिति, इयं श्वेतकेतूपाख्याने वर्त्तते । तत्रोपक्रमे, "अपि वा तमादेशमप्राक्षो येनाश्रुतं श्रुतं भवती"त्यादिना एकविज्ञानेन सर्वविज्ञानं प्रतिज्ञातम् । तदेकमेव चेत् सर्वं भवेत् तदोपपद्यते । यथा सुवर्णखण्डाः सुवर्णकार्यं च सर्वं सुवर्णमिति सुवर्णज्ञाने तज्ज्ञानं भवति । तदर्थं, "सदेव सौम्ये"त्यारभ्य निरूपितम् । तदनन्तरं जडस्य सर्वस्यापि तदात्मकत्वकथनाय, "ऐतदात्म्यमिदं सर्वमि"त्युक्तम् । एतस्या अयमर्थः—एतद् आत्मा यस्य स एतदात्मा ब्रह्म, तस्य भाव ऐतदात्म्यम् । "एतदात्मनः" अत्रापि पञ्चमी समवायिकारणं वक्ति । तथाच एतदात्मनः सकाशाद् मृदो घटादिवत् तत्सद्रूपेणेदं सर्वं जातमित्यर्थः । सदेव सौम्येति दृष्टान्तवाक्ये जडस्य तदात्मकत्वे उक्तेऽपि पुनर्दार्ढ्यार्थं दार्ष्टान्तिकवाक्येऽप्युक्तम् । अग्रे विनाशित्वादिजडगतदोषपरिहरणाय, तत्सत्यमिति । तत् पूर्वोक्तं सत्यं सर्वकालं संदित्यर्थः । तेन वैनाशिकार्द्धवैनाशिकप्रतिपन्ने असत्त्वविनाशित्वे मायावादिप्रतिपन्नं मायिकत्वञ्च निरस्तम् । तदग्रे च पूर्वोक्तयोर्जडजीवयोः सदात्मकत्वे मध्ये हेतुमाह—स आत्मेति । स परमेश्वरः आत्मा सर्वस्य स्वरूपभूतः, अनागन्तुकानारोपितरूपः स इत्यर्थः । यथा सुवर्णं कटककुण्डलादीनाम् । तथाच सर्वस्य तदात्मकत्वात् सर्वं सत्यमिति

ब्रह्मेदं सर्वं, स वै सर्वमिदं जगदित्यादिश्रुतिभिः प्रपञ्चरूपेणापि पूर्वं सन्नेव स्वस्याऽद्वयत्वेन तदतिरिक्तस्याऽभावात् स्वस्य क्रीडार्थमाधारत्वेन प्रपञ्चरूपं संपादयितुं तद्रूपेणाविर्भूतो भगवानेवेति श्रुतितात्पर्यरूपः ।

---

ज्ञापनायेदं मध्ये उक्तम् । पुनश्च जडस्य सर्वस्य तदात्मकत्वमुक्त्वा जीवस्याप्याह । तत्त्वमसीति । तथाच यथैतदात्म्यमेतदात्मनो भावः, तथा त्वम् असि तद् एतदात्मनो भावः त्वं भवसीत्यर्थः । अत्र सच्चिद्रूपेण समवायिकारणं भगवान् जडे सद्रूपेणैवेति भेदः । असीतिमध्यमपुरुषेणैव त्वम्पदलाभात्, तस्य भावस्तत्त्वमित्येकपदेनाऽपि तथार्थो भवतीति लिखितमावरणभङ्गे श्रीमत्पुरुषोत्तमचरणैः । तथाच सर्वं तादृशार्थमभिसन्धायैव श्रीमद्धरिरायचरणैर्महावाक्यरूपस्य सम्पूर्णप्रपाठकस्य उपलक्षिकेयं श्रुतिरुक्ता । यत एतत्सर्वं निरूपितमस्ति निबन्धविद्वन्मण्डनादिष्विति दिक् ।

"स वै सर्वमिदं जगदिति" पूर्वोक्तरीत्या स्पष्टम् । आदिपदात् "सन्मूलाः सौम्येमाः प्रजाः सदायतनाः सत्प्रतिष्ठानाः" "आत्मा वा इदमग्र आसीत्" 'सदेव सौम्येदमग्र आसीत्" "स आत्मानं स्वयमकुरुते"त्यादिश्रुतयोऽत्रानुसन्धेयाः । प्रपञ्चरूपेणापि पूर्वं सन्नेवेत्यन्तं, सदेव सौम्येदमग्र आसीदितिश्रुतितात्पर्यम् । तत्र हेतुः—तदतिरिक्तस्याभावादिति । सद्रूपस्य ब्रह्मणोऽतिरिक्तस्याभावादित्यर्थः । तत्रोपष्टम्भिकां युक्तिमाहुः । स्वस्येत्यादि, आविर्भूत इत्यन्तम् । स्वस्यात्मनः, आनन्दमात्रकरपादमुखोदरादिविशिष्टस्य पुरुषोत्तमस्वरूपस्य क्रीडा रसाद्यनुरूपं रमणमित्यर्थः । सा च तदनुकूलपदार्थैर्भिन्नैः सम्भवतीति षष्ठीतात्पर्यम् । "स ईक्षाञ्चक्रे, बहुस्यां प्रजायेय" इत्यादिश्रुतेः । भेदोऽत्र हेम्नस्तत्कटककुण्डलादिवज्ज्ञेयः । यद्वा स्वैः, आनन्दात्मकैर्भक्तैस्तदनुकूलतादृशपदार्थैरात्मीयैः करणभूतैः क्रीडतीति विग्रहः । तस्यै इति तदर्थं, तां कर्तुमित्यर्थः । एतेषां तादृशरूपत्वाभावे समानशीलव्यसनाभावे सति रमणाननुभवप्रसङ्गात् । तस्माद्युक्तमानन्दरूपस्य क्रीडोपयोगिनामानन्दरूपत्वम् । सा चाधारेण विना न भवतीत्यतस्तत्राधारापेक्षा तदाहुः—आधारत्वेनेति । स्वाधारत्वेनेत्यर्थः । आधारश्च जडजीवात्मकः सच्चिद्रूपो भवतीत्यतः सच्चिदंशेन तद्रूपस्य प्रपञ्चस्य सम्पादनम् । तदर्थमेव प्रपञ्चरूपेणाऽऽविर्भूतः

ननु भगवत एवं विलक्षणाभ्यां स्वरूपाभ्यां द्वैतापत्तिरितिचेन्न। "नेह नानास्ति किञ्चने"त्यग्रिमश्रुत्या तद्वैलक्षण्यनिषेधात् । तदर्थस्तु-

---

सकलजनपरिदृश्यमानो जातः। तद्रूपत्वादेवाविर्भावो, न तु जननम्, नित्यापरिच्छिन्नरूपत्वात् । नित्यापरिच्छिन्नतनौ प्राकट्यमित्युक्तेः । ननु सकलजनपरिदृश्यमानोऽन्य एव भविष्यतीत्याशङ्कयाहुः—भगवानेवेति । भगवान् पुरुषोत्तम एवाविर्भूतो, नान्य इत्यर्थः । "पुरुष एवेदं सर्वमि"त्यादिनिरुक्तश्रुतिप्रामाण्यात् सदंशेन जडेऽत्र चिदानन्दांशौ तिरोहितौ, सच्चिदंशेन जीवे, अत्रानन्दांशस्तिरोहित इच्छातः । एतयोः क्रीडार्थमाविर्भावितत्वात् । तथाच काष्ठवह्निन्यायेन आविर्भूताऽनाविर्भूते स्वरूप एव च, "सत्यं ज्ञानमनन्तं ब्रह्मे"त्यादिलक्षणलक्षितं सच्चिदानन्दस्वरूपत्वं भगवत्त्वं जगतः सिद्ध्यति । हेम्नः कटककुण्डलादिवत्, कार्यकारणयोरैक्यादखण्डाद्वैतं ब्रह्मेति श्रुतीनां तात्पर्यम् । तथाच एतादृशतात्पर्यरूपोऽखण्डाद्वैतरूपोऽसौ ब्रह्मवाद इति पूर्वेण सम्बन्धः । अत एव, "अखण्डं कृष्णवत् सर्वमिति निर्गलितं वच" इति श्रीमदाचार्यचरणोक्तिः, "सर्वं खल्विदं ब्रह्मे" त्यादिश्रुतेः ।

नन्वित्याशङ्कते । कार्यकारणस्वरूपयोर्वैलक्षण्यादेकस्यैव द्विरूपत्वाद् द्वैतापत्तिरित्यर्थः । नेति निषिद्ध्याग्रे समादधते नेति । नेह नानास्तीति । इयं श्रुतिः काठकोपनिषदि द्वितीयाध्याये प्रथमवल्ल्यामस्ति । तत्र प्रथमाध्याये प्रथमवल्ल्यां पूर्वं यमेन सर्वं नश्वरं निरूपितं श्रुत्वा सर्वस्यापारमार्थिकत्वं ज्ञात्वा पारमार्थिकं वरं याचितवान् शिष्यः । ततश्च द्वितीयवल्ल्यां विरक्तत्वेन परीक्षितं शिष्यं निःश्रेयसहेतुकेवलविद्यार्थित्वेन स्तोतुम् अभ्युदयनिःश्रेयसहेत्वोर्विद्याविद्ययोर्विभागमाह यमः । ततः पूर्वोक्तविद्याविद्यादीनां फलादिकं वक्तुं तृतीयवल्ल्यारम्भः। एवं प्रथमाध्यायसङ्क्षेपः । तदनन्तरं द्वितीयाध्याये पूर्वोक्तविद्यादिप्रपञ्चाऽभिधानाय प्रथमवल्ल्यारम्भः।"पराञ्चि खानीत्यारभ्य, तं देवाःसर्वेऽर्पितास्तदु नात्येति कश्चन एतद्वैतत्, यदेवेह तदमुत्र यदमुत्र तदन्विह" इत्यन्तम् । एतदर्थस्तु—देवा अधिदैवमग्न्यादयः, अध्यात्मं वागाद्यश्च अर्पिताः स्थितिकाले प्रवेशिताः । तं हिरण्यगर्भरूपं भगवन्तं नात्येति तदात्मकताम् अतीत्य तदन्यत्वं न गच्छति तादृशदेवतारूपमधिदैवमध्यात्ममित्येकवचनेन सम्बन्धः । य एतत् पश्यति, स वै इति नि-

इह सर्वरूपतया अद्वये ब्रह्मणि प्रपञ्चरूपेऽपि सच्चिदानन्दतयैकरूपे वस्तु नाना न, किन्त्वब्रह्मदृशामविद्यया भासत एवातो वैलक्षण्यम् । अत एव वाचारम्भणश्रुतिर्विकाराणां स्वदोषेण प्रतीतानां मिथ्यात्वं,

---

श्चयेन तत् प्राकरणिकं ब्रह्मैव पश्यतीत्यर्थः । उपक्रमोपसंहारे जीवेशयोरैक्यमुक्तम् । तन्मध्ये जडस्यापि तदुक्तम् । एवञ्च तन्नानात्वदर्शनविरोधादयुक्तमित्याशङ्क्य नानात्वदर्शनं भ्रान्तिरिति सूचयितुं वदति "यदेवेह तदमुत्र यदमुत्र तदन्विह" इह जीवोपाधौ अमुत्र ईशोपाधौ अनु उपाधिमनुप्रविष्टं तदेवेत्यर्थः । उपाधिकृतस्य भेदस्य मिथ्यात्वेन तद्दर्शनस्य निन्दां वदति "मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति" इति । इवशब्दोऽत्र चिद्रूपैक्याविरोधं सूचयति, तादृशभेदस्य तथात्वात् । व्यतिहारोक्तिरैक्यदार्ढ्याय विद्यानिवर्त्यत्वादविद्याकार्यत्वाच्च भेदस्य मिथ्यात्वमित्याह । "मनसैवदमाप्तव्यं नेह नानास्ति किञ्चन" । मनसा आचार्याऽऽगमसंस्कृतेनैकाग्रेण । एवेन भेदग्राहिचक्षुरादिनिरासः । आप्तव्यं वेदितव्यम् । उत्तरार्द्धं भेददर्शननिन्दोपहासपरमिति केचित् । एतत् सर्वं कठवल्लीभाष्ये विस्तृतमित्यत्र दिशाऽवगन्तव्या । अग्रिमश्रुत्येति । पूर्वोक्तानामभेदबोधिकानां श्रुतीनामग्रिमया वैलक्षण्येऽपि द्वैतत्वनिषेधाच्च द्वैतापत्तिरित्यर्थः । हेम्नः कटककुण्डलादिवैलक्षण्येऽपि वस्तुतो द्वैताभाववत् । अत एव श्रुतिस्तादृशाऽभेदमाह । "यः पूर्वं तपसो जातमद्भ्यः पूर्वमजायत, गुहां प्रविश्य तिष्ठन्तं यो भूतेभिर्व्यपश्यत एतद्वैतदिति" "कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन्नि"ति च । "न हि सत्यस्य नानात्वमविद्वान् यदि मन्यसे । नानात्वं छिद्रयोर्यद्वज्ज्योतिषोर्वा तयोरिव ।" "यथा हिरण्यं बहुधा समीयते नृभिः क्रियाभिर्व्यवहारवर्त्मसु । एवं वचोभिर्भगवानधोऽक्षजो व्याख्यायते लौकिकवैदिकैर्जनैरि"त्याद्युक्तेश्च सच्चिदानन्दतयेति । जडजीवान्तर्यामिरूपतयेत्यर्थः । किन्त्वब्रह्मदृशामविद्ययेति । न ब्रह्मणि दृष्टिर्येषां ते अब्रह्मदृशस्तेषाम् । अविद्ययेति । मायाशक्त्येत्यर्थः । "यावत् स्याद् गुणवैषम्यं तावन्नानात्वमात्मनः । प्रतिबुद्ध इव स्वप्नान्नानात्वाद् विनिवर्तेत' इत्याद्युक्तेः । अत एव "पराञ्चि खानि व्यतृणत् स्वयम्भूस्तस्मात् पराङ् पश्यति नान्तरात्मन्निति श्रुत्या बाह्यज्ञानवतामिन्द्रियाणां स्वयम्भुवा हिंसनमुक्तम् । एवेति । निश्चितम् । अत इति । अविद्यया भासमानस्यापि भेदस्य मिथ्यात्वान्न विलक्षणत्वं, किं त्वेकरूपत्वमित्यर्थः । एतदेवोपष्टम्भयन्ति । अत एवेति । एकरूपत्वादेवेत्यर्थः । वाचा-

वस्तुत्वेन सत्त्वं चाह ।

---

रम्भणश्रुतिरिति । उत "तमादेशमप्राक्ष्यो येनाऽश्रुतं श्रुतं भवति" इत्यादि । "यथा सौम्यैकेन" इत्यादिप्रतिज्ञादृष्टान्तश्रुतिबलेन प्रपञ्चसमवायित्वं ब्रह्मणः प्रतिपादितम् । तत्र दृष्टान्तवाक्यशेषे वाचारम्भणमित्यादि श्रूयते। अस्यायमर्थः । यो विकारस्तद्वाचारम्भणम् । यदारभ्यते तदारम्भणम् । "कृत्यल्युटोबहुलमि"ति कर्मणि ल्युट् । वागारब्धकारणस्यैव नामधेयं, कारणमेव हि तत्तदर्थक्रियासिद्ध्यर्थं तेन तेन नाम्ना व्यवह्रियत इति कारणादभिन्नमेव कार्यं, न तु स्वेन रूपेण कारणाद्भिन्नत्वम् । तदाह "मृत्तिकेत्येव सत्यमि"ति । कारणरूपेणैव सत्यं, न तु मिथ्या । न च वाचारम्भणम् अनूद्य तस्य विकारत्वं विधाय ततस्तस्यैव नामधेयत्वनिगमनाद् विकारो वाङ्मात्रेणैवारभ्यते, न तु वस्तुतः खपुष्पवदिति वाच्यम् । ब्रह्मकारणत्वानुपपत्त्या "यतो वा इमानी"त्यादिश्रुतिव्याकोपापत्तेः । यदि च विकारो वाङ्मात्रतामभिप्रेयात् तदा वाचारम्भणं विकारो मृत्तिकैव सत्यमित्येव वदेत् । तावतैव मिथ्यात्वसिद्धेः । वदति त्वेवं, मृत्तिकेत्येव सत्यमिति । तेनोक्तार्थ एव सिद्ध्यति ।

अत एव कार्यबोधकश्रुतौ युक्तिविरोधं परिहृत्य कार्यबोधकवाक्याऽन्तरे श्रुतिविरोधपरिहाय सूत्रमाहुर्व्यासचरणाः—'तदनन्यत्वमारम्भणशब्दादिभ्य" इति सूत्रे आदिपदेन, इतिशब्दो, नामधेयपदं, सदेव सौम्येत्यादीनि वाक्यानि च सङ्गृह्यन्ते । अर्थस्तु निरुक्तप्रकार एव । यत्तु रामानुजाचार्या भास्कराचार्याश्चेदं सूत्रं मुख्यतया भेदवादनिराकरणार्थकम् , मायावादनिराकृतिस्त्वानुषङ्गिकीत्याहुः । तन्निराकृतमणुभाष्ये श्रीमदाचार्यचरणैः । पुरुषोत्तमचरणैश्च भाष्यप्रकाशेऽपि विशदतयानिरस्तम् । भेदवादस्य, "तर्काप्रतिष्ठानादि"ति सूत्रे पूर्वमेव निराकृतत्वात् । प्रकृतिवादश्च "प्रतिज्ञादृष्टान्तानुपरोधादि"त्ति सूत्रे पुरा निराकृतएवेति दिक् । विस्तरभिया नात्र वितन्यते ।

अत्र तु परमतरीत्यैव श्रुत्यर्थमादाय नानात्वं निराकुर्वन्नाहुः । विकाराणां स्वदोषेण प्रतीतानां मिथ्यात्वं वस्तुत्वेन सत्त्वं चाह वाचारम्भणश्रुतिरिति भवानभ्याहेत्यर्थः । तथाच त्वन्मतरीत्याऽपि विकाराणां मिथ्यात्वे नानात्वाभाव एवेति भावः ।

ननु घटः शरावादिः पटः शिरोवेष्टनशाटकादयो बहवः सन्ति, तेषां कथमेकत्वमित्याशङ्क्य तस्य दृष्टान्तेन निराकरणपूर्वकं सिद्धान्त-

ननु वस्तुतोऽतथात्वे कथं तथाप्रतीतिरितिचेन्न । सितामूर्तीष्विव नानात्वप्रतीतावप्येकरूपत्वेन वस्तुनस्तथात्वाभावात् । अत एव न ब्रह्मविदां तथाप्रतीतिः । स्वरूपमात्रदृष्टित्वात् । ये पुनर्बहिर्दृष्टयस्तेषामेव तथात्वभानाद् न वस्तुनि तथात्वम् । तात्पर्यान्तविचाराभावेन तद्दृष्टेरसंमतत्वात् । अत एव विचारसिद्ध्यर्थकत्वेन

---

दृढीकरणार्थमाशङ्कन्ते । नन्विति । अतथात्वे, अनानात्वे, । तथात्वप्रतीतिः—नानात्वप्रतीतिरित्यर्थः । समादधते । नेति । सिताया बालानां क्रीडार्थं कङ्कणाद्याभरणानि, मन्दिराणि हस्त्यश्वादिमूर्तीश्च कुर्वन्ति, तासां नानाप्रतीतिर्भवति । तथाऽपि तासां सितात्वेनैकरूपत्वेन सितारूपवस्तुनो नानात्वाभावादित्यर्थः । तथाच ब्रह्मणः सर्वरूपत्वेऽपि ब्रह्मत्वेन नानात्वाभावादिति भावः । दृष्टान्तदार्ष्टान्तिके युक्त्यैवोपष्टम्भयन्ति । अत एवेति । एकरूपत्वादेव तेषां न मिथ्यात्वप्रतीतिरित्यर्थः । तत्र हेतुमाहुः । स्वरूपमात्रदृष्टित्वादिति । ब्रह्मस्वरूपमात्रदृष्टित्वं तेषाम् तस्मादित्यर्थः । कार्येऽपि दृष्टिस्तेषां, तथाऽपि कारणाऽनन्यत्वेन, न तु तत्पृथक्तयेति भावः । यथा बालानां सितावस्तुज्ञानाभावेन तत्क्रीडनकेषु नानात्वबुद्धिर्भवति, न तु सिताज्ञानवतां प्रबुद्धानाम् । अतः प्रबुद्धदृष्टिरेव समता, न तु बालदृष्टिः । तदेवोपपादयन्ति ये पुनरिति । बहिर्दृष्टय इति अन्तःस्थितस्य ब्रह्मणो दर्शनं येषां न भवति ते बहिर्दृष्टयः । तेषामेवेति अब्रह्मदृशामेवेत्यर्थः । तथात्वभानान्न वस्तुनि तथात्वमिति । वस्तुदृष्ट्यभावेनैकस्वरूपत्वाभावात्, न वस्तुन्येकरूपत्वाभाववत्त्वं नानात्वमित्यर्थः । तत्र हेतुमाहुः तात्पर्यान्तेत्यादि । तात्पर्यान्तविचाराभाववतां बालानां दृष्टेरसम्मतत्वादित्यर्थः । तात्पर्यं च एकेनैव मृदादिसमवायिकारणेन सर्वे घटपटादयो भवन्ति, तत्समवायिकारणञ्च ब्रह्मणः सदंशरूपम्, तच्च सर्वस्मिन्ननुस्यूतमतस्तद्रूपत्वेन सर्वस्यैकरूपत्वान्न क्वापि नानात्वम् । "नेह नानाऽस्ति किञ्चन," "वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येवसत्यं," "तत् केन कं पश्ये"दित्यादिश्रुतीनां तात्पर्यम् । तदेव अन्तःसिद्धान्तो वादिप्रतिवादिभ्यां निर्णीतोऽर्थः । तत्र विचार एव नास्तीति तेषां कुतस्तन्निर्णयज्ञानम् ? विचारश्च—किं कारणं, किं कार्यं, कीदृशं च तयोः स्वरूपमित्यादिः । अतस्तेषां दृष्टेरसंमतत्वम् । तस्मादित्यर्थः । तदर्थमेव उत्तरमीमांसाशास्त्रमित्याहुः । अत एवेति । बहिर्दृष्टिबोधसापेक्षत्वादेवेत्यर्थः । विचारो

शास्त्रसार्थक्यम् । अत एव, अखण्डं कृष्णवत् सर्वमित्याचार्यवर्याः । तस्मात् सर्वरूपमद्वयं ब्रह्मेति सिद्धम् ।

नन्वेवं प्रपञ्चस्य भगवद्रूपत्वे मुमुक्षुसाधनोपदेशेषु तस्य हेयत्वोपदेशः कथं शास्त्रे युज्यते इतिचेत्, सत्यम् । स्वक्रीडार्थमेव

---

जिज्ञासा, तस्याः सिद्धिः फलं ज्ञानमिति यावत्, तदेव अर्थः प्रयोजनं यस्य तद्विचारसिद्ध्यर्थकं, तस्य भावः, बहुव्रीहौ कः । शास्त्रस्य । उत्तरमीमांसाशास्त्रस्येत्यर्थः । सार्थक्यं प्रयोजनवत्त्वम् । वेदस्य विचाराऽभावेन निर्विचिकित्सतया बोधाभावादित्यर्थः । "कर्माकर्मविकर्मेति वेदवादो न लौकिकः । वेदस्य चेश्वरात्मत्वात् तत्र मुह्यन्ति सूरय" इत्युक्तेः । न हि बहिर्दृष्टिसापेक्षमेवेदं शास्त्रं, किन्तु ज्ञानिसापेक्षमपि । तदुक्तमाचार्यवर्यैः--"असन्दिग्धेऽपि वेदार्थे स्थूणाखननवन्मतः । मीमांसानिर्णयः प्राज्ञे दुर्बुद्धेस्तु ततो द्वयमिति" । यद्वा ज्ञानिनां निरुक्ततादृशविचारसिद्ध्यर्थकत्वेन शास्त्रस्य, शास्तीति शास्त्रं वेदः तस्य, "नेह नानास्ति किञ्चन" "सर्वं खल्विदं ब्रह्मे"त्यादिरूपस्य सार्थक्यम् । अन्यथैतच्छास्त्रस्य वैयर्थ्यं स्यादित्यर्थः । अत्रार्थे उपष्टम्भकं प्रमाणमाहुः अत एवेति । तात्पर्यान्तविचारवताम् एतच्छास्त्रे अखण्डाऽद्वैतब्रह्मणः सिद्धान्तितत्वादेवेत्यर्थः । उपसंहरति । तस्मादिति स्वस्य क्रीडार्थमाधारत्वेन प्रपञ्चरूपं संपादयितुं तद्रूपेण भगवत एव प्रादुर्भूतत्वादित्यर्थः । सर्वरूपमद्वयं ब्रह्मेति सिद्धमिति । निरुक्तश्रुतितात्पर्यप्रमाणबलेन सर्वरूपतया अखण्डाद्वैतं ब्रह्मेति निष्पन्नमित्यर्थः ।

एवं प्रपञ्चस्य भगवद्रूपत्वे सिद्धे तस्य हेयत्वोपदेशो विरुद्ध्यत इति तन्निरासाय पूर्वमाशङ्कते--

नन्विति । मुमुक्षुसाधनोपदेशेष्विति । "इमा रामाः सरथाः सतूर्या न हीदृशा लम्भनीया मनुष्यैः" "स्वाराज्यतुष्ट उपशान्त इदंविजह्या"दित्यादिष्वित्यर्थः । तस्येति । प्रपञ्चस्येत्यर्थः । शास्त्र इति । वेदादौ । समादधते सत्यमिति । अर्द्धाङ्गीकारः । अस्ति यद्यपि हेयत्वोपदेशस्तस्य, तथापि तव मनीषितं भगवदतिरिक्तत्वं मिथ्यात्वं तु न समायाति, किन्त्वन्यत् प्रयोजनमस्तीत्याहुः क्रीडार्थमेवेति । क्रीडार्थप्रयोजनमेव प्रपञ्चसृष्टेः । तथाच प्रपञ्चसृष्टेः क्रीडाप्रयोजकत्वेन प्रपञ्चस्य न भगवदतिरिक्तत्वं मिथ्यात्वं, किन्तु भगवद्रूपत्वमेवेत्यर्थः । अन्यथा भगवत्क्रीडाया एव मिथ्यात्वापत्तेः, "एकोऽहं बहु स्यामिती"च्छाया मिथ्यात्वे पर्यवसा-

तत्सृष्टेस्तत्र विचित्रे रूपे जीवानां स्वीयत्वेनाऽऽसक्तिभ्रमनिवार-
णाय । अन्यथा मुक्ताऽधिकभक्तानामन्येषां वा भजनोपयोगितया

---

नात् सत्यसङ्कल्पत्वानुपपत्तेश्च । तस्मान्न मिथ्यात्वाय शास्त्रे हेयत्वो-
पदेशः, किन्त्वन्यप्रयोजनायेति । तदाहुः तत्रेत्यादिना । तत्र सृष्टौ । विचित्रे
रूपे स्त्रीत्वपुंस्त्वयुवबालवृद्धत्वादिप्रकारके बन्धुसुहृदादिरूपे । जीवाना-
मविद्यापरवशानां । स्वीयत्वेनाऽऽसक्तिः प्रीतिः—अहमेतेषां, मदीयाश्चेमे
इत्याद्यात्मीयत्वरूपा, सम्बन्धरूपा वा । एतस्याश्च मिथ्यात्वाद् भ्रमरूप-
त्वम् । एतादृशाध्यासस्यैव तथात्वात् । "कस्य के पतिपुत्राद्या मोह एव
हि कारणमि"ति वाक्यात् । अनर्थहेतुत्वेन दोषरूपत्वं च । तादृशभ्रमस्य,
"अहं ममेति स्वीकृत्य करोति कुमतिर्मतिमि"त्यादौ निन्दाश्रवणात्तादृशा-
सक्तिभ्रमरूपदोषनिवारणाय शास्त्रे प्रपञ्चस्य हेयत्वोपदेशो युज्यत इति
पूर्वेण सम्बन्धः । एवं नो चेद् बाधकयुक्तिमाहुः । अन्यथेत्यादि । आ-
सक्तिभ्रमनिवारणार्थत्वाभावे । मुक्ताधिकभक्तानामिति । मुक्तेरधिकाश्च ते ।
भगवान् "भजतां मुकुन्दो मुक्तिं ददाति कर्हिचित् स्म न भक्तियोगम् ।"
इत्यादिवचनाद् येषां भक्तिं ददाति भगवान्, ते मुक्ताऽधिकाः पूर्णपुरुषो-
त्तमचरणपरिचरणपरायणान्तःकरणाः । भक्तिस्तु परब्रह्मप्रापिका, प्र-
वचनादिसाधनासाधनीया । "नायमात्मा प्रवचनेन लभ्यो न मेधया न
बहुनाश्रुतेन यमेवैष वृणुते तेन लभ्य" इतिश्रुतेः । मुक्तिस्तु तप आदिसा-
धनसाध्या । "तपसा ब्रह्म विजिज्ञासस्वेति" श्रुतेः । तथा च पूर्वसाधना-
दिभिर्मुक्तिं प्राप्नुवन्तस्तदनन्तरं तीव्रविरहभावसंपत्तौ भगवत्कृपया
वरणाधिकारं प्राप्नुवन्तो भक्ताः । ज्ञानिभक्तानामियं व्यवस्था । पुष्टि-
भक्तास्तु पूर्वत एव निःसाधनाः पुरुषोत्तमसेवापरायणान्तःकरणाः ।
वरणाधिकारसम्पत्तिस्तु तेषां पूर्वमेव जाता यदा भगवता सृष्टाः, का-
यिकसृष्टित्वात् तेषाम् "पुष्टिं कायेन निश्चय" इति श्रीमदाचार्यचरणवाक्
पीयूषात् । "स वै नैव रेमे" "तस्मादेकाकी न रमते" "सद्वितीयमैच्छत्"
"स हैतावानासे"त्यादिश्रुतेः । "भिन्नैव काचित् सा सृष्टिर्विधातुर्व्यतिरे-
किणी" इति वाराहपुराणाच्च । ज्ञानिनां तु अन्तत एव मुक्ताधिक-
भक्तत्वम्, एतेषान्तु पूर्वत एवेति नितरां तथा । केवलज्ञानिनस्तुमुक्ता
एव, न भक्ताः । "नाहं प्रकाशः सर्वस्य योगमायासमावृतः । ते प्राप्नुव-
न्ति मामेव सर्वभूतहिते रताः" इत्यादिवाक्यैर्ज्ञानिभक्तयोर्विवेक उक्तः
श्रीमत्प्रभुचरणैः । "ज्ञानी चेद्भजते कृष्णं तस्मान्नास्त्यधिकः पर" इति
प्रशंसावाक्यमपि । अत एव श्रीमदाचार्यचरणा निबन्धे तत्त्वदीपे,

तत्परिग्रहो न स्यात्। ब्रह्मविदां वा ब्रह्मत्वप्रतीतावहेयत्वबुद्धिर्न स्यात्। अतो भ्रमादासक्तिस्तन्निवारणार्थमेव शास्त्रे तथोक्तिरिति जानीमः।

ननु तदा उपास्यत्वेन वेदान्तेषु प्रपञ्चरूपमेवोपदिश्येत। मूलरूपत्वात्। नचास्तु तथैवेति वक्तुं शक्यम्। "सर्वत्र प्रसिद्धोपदे-

---

"तदुपासनया ज्ञानात् परमाऽऽत्मत्वमस्य हि। ज्ञानमार्गे त्वेतदेव सेव्य" इति, भाष्येऽप्यानन्दमयाधिकरणे प्रपञ्चितमस्ति। "गतेरर्थवत्त्वमुभयथा हि विरोध" इति तृतीयाध्यायेऽपि। अतस्तादृशा मुक्ताधिकभक्ता ज्ञानिभक्ताः पुष्टिभक्ता इत्यर्थः। अन्येषां वेति। केवलज्ञानिनामक्षरज्ञानवतां मुक्तानाम्, अखण्डाऽद्वैतज्ञानवतामिति यावत्। भजनोपयोगितयेति। "इदं हि विश्वं भगवानिवेतरः" "क्रीडार्थमात्मन इदं त्रिजगत् कृतं ते" "क्रीडाभाण्डं विश्वमिदं, पातालमेतस्य हि पादमूलं, यावन्न जायेत परावरेऽस्मिन् विश्वेश्वरे द्रष्टरि भक्तियोगः। तावत् स्थवीयः पुरुषस्य रूपं क्रियावसाने प्रयतः स्मरेते"त्यादिवाक्येषु प्रपञ्चस्य भगवद्रूपत्वेन भगवद्भजनोपयोगित्वं व्यासचरणैः शुकचरणैश्चोक्तम्। मिथ्यारूपत्वे त्वस्य लीलारूपत्वमुपास्यत्वञ्च ते कथं वदेयुः। यतस्तेषां तद्रूपतया तस्य प्रपञ्चस्य परिग्रहः परिज्ञानमेव न स्यादित्यर्थः। तेषां ब्रह्मदृष्टित्वात्। अन्यदप्याहुः। ब्रह्मविदां वेति। यस्य ब्रह्मरूपत्वेन तेषामहेयत्वबुद्धिः। अत एव, पातलमेतस्येत्याद्याहुः श्रीमच्छुकादयः। अत इति। प्रपञ्चस्य ब्रह्मरूपत्वादित्यर्थः। तथोक्तिरितीति। हेयत्वोक्तिरित्यर्थः। एवं सर्वस्य ब्रह्मरूपत्वे सिद्धे तत्र हेयत्वोक्तिविरोधे परिहृतेऽप्युपास्यरूपस्य तद्भिन्नतयानिरूपणश्रवणात् प्रतिवादी प्रत्यवतिष्ठते—

नन्विति। यदा सर्वस्यैव प्रपञ्चस्य ब्रह्मत्वं तदा, "आत्मा वारे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य" इत्याद्युपासनाविषयेषु वेदान्तवाक्येषु प्रपञ्चरूपमेव उपास्यत्वेन उपदिश्येत। भवन्मते तस्यैव मूलरूपत्वादित्यर्थः। ननु ब्रह्मणः सर्वरूपत्वेन सर्वरूपस्यैवोपदेशोऽस्तु उपासनावाक्येष्वित्याशङ्कायामाह—नचेति। तथैवेति। सर्वरूपस्यैव उपदेशोऽस्त्विति न च वक्तुं शक्यम्। तत्र हेतुमाह। सर्वत्रेति। अस्यार्थस्तु, सर्वत्र वेदान्तवाक्येषु प्रसिद्धस्य "निष्कलं निष्क्रियमि"त्यादिवाक्यबोधितस्य ब्रह्मण एव उपस्थितत्वेन उपदेशो, न तु प्रपञ्चरूपस्य

शादि"त्यधिकरणविरोधादिति चेन्न । वेदान्तेषु ज्ञानार्थमुपासनानिरूपणं चित्तशुद्धिहेतुत्वेन, न तु सिद्धे ज्ञाने । तथाचाज्ञान् प्रत्येव प्रपञ्चरूपे सर्वाधिकत्वज्ञानाभावेनोपासनाऽसिद्धेस्तद्भिन्नस्य तथात्वमुच्यते । सिद्धे तु ज्ञाने सर्वत्र ब्रह्मस्फूर्तिर्वरणे वा भक्तिरिति नोपासनावसर इति भेदेन पूर्वमुपास्यनिरूपणमित्यर्थः । अत एव, वासुदेवः सर्वमित्यादिवाक्यानि ।

नन्वेवं शुद्धब्रह्मवादे जीवनामपि तद्रूपत्वेन भजनानुपपत्तिरितिचेन्न । अंशत्वेनैव तद्रूपता तेषां, नांशिनः । ब्रह्मवादे सर्व-

तथात्वेनोपदेशोऽस्तीति । अधिकरणविरोधादिति । प्रथमाध्यायस्य द्वितीयचरणस्य प्रथमाधिकरणविरोधादित्यर्थः। नेति निराकृत्य समादधते। वेदान्तेष्विति । तद्भिन्नस्य तथात्वमिति । अज्ञान् प्रत्येव प्रपञ्चभिन्नस्य उपास्यरूपत्वमुच्यते, न तु ज्ञानिनः । वस्तुतः प्रपञ्चरूपस्य तद्भिन्नत्वाभावात् । तेषां प्रपञ्चरूपत्वे सर्वाधिकत्वज्ञानाभावेनोपासनाया असिद्धेः । अतो न वस्तुतः प्रपञ्चोपास्यरूपयोर्भिन्नत्वं, किन्तु बालानुशासनार्थमेव तथोक्तिरिति भावः । "परोक्षवादो वेदोऽयं बालानामनुशासनमि"त्युक्तेः । तेन "द्रष्टव्यः श्रोतव्य" इत्यादिवाक्यानां निर्वाहः। पातालमेतस्य-इत्यादौ तु प्रपञ्चरूपस्यापि भगवत उपास्यरूपत्वं निरूपितम् । अत एव "यावन्न जायेत परावरेऽस्मिन्नि"त्याहुः । सिद्धे त्विति । केवलब्रह्मज्ञानिनां सर्वत्र ब्रह्मस्फूर्तिः, अग्रे तु यथाधिकारसम्प्राप्तिः । सिद्धाधिकारिणां तु भक्त्या नोपासनाऽवसरः । इतिभेदेनेति । निरुक्तप्रकारेण भेदेनेत्यर्थः । तदुपष्टम्भकं भगवद्वाक्यानां निदर्शनमाहुः, अत एवेत्यादि । "वासुदेवः सर्वमिति स महात्मा सुदुर्लभः" "सर्वं वासुदेव" इत्येतादृशज्ञानवान् यो महात्मा सोऽतिदुर्लभ इत्यर्थः। आदिपदात् "स सर्वविद्भजति मां सर्वभावेने"त्यादीनां सङ्ग्रहः।

एवं जडात्मकस्य प्रपञ्चस्य, ब्रह्मणः सद्रूपतया अभेदो निरूपितः। जीवाभेदस्तु तत्त्वमस्यादिवाक्यैश्चित्सजातीयतया निर्विवाद एवेत्यतो नोक्तः। तथापि जीवब्रह्मणोरैक्ये भजनाऽनुपपत्तिरित्याशङ्कां निरसितुं तामेवाहुः—

नन्वेवमिति । भजनानुपपत्तिरिति । तरतमभावाभावात् तदनुपपत्तिरित्यर्थः । "स एकाकी न रमते" इति श्रुतेः । यद्वा भगवद्रूपत्वे सिद्धे भजनस्याऽप्रयोजकत्वादनुपपत्तिरिति समादधते । अंशत्वेनैवेति ।

स्यैव ब्रह्मणः सर्वात्मत्वात् । परं तद्रूपेण । "इन्द्रो मायाभिः पुरुरूप ईयत" इति श्रुतेः । तथाच सहजांशानां पुनः पूर्वभावसम्पत्त्यर्थमविद्यादोषनिवृत्त्यर्थं च भजनोपपत्तिरिति भावः ।

ननु तथापि भजनमात्रपर्यवसायिनि पुष्टिमार्गे निवर्त्यदोषा-

---

सहजांशानामिति । "अंशो नानाव्यपदेशात्" "ममैवांशो जीवलोके जीवभूतः सनातनः" "यथाग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्त्येवमेवास्मादात्मनः सर्वे प्राणा" इत्याद्युक्तेः । अंशत्वं च राश्येकदेशत्वम् । पूर्वभावसम्पत्त्यर्थमिति । साम्प्रतं तु, "पराभिध्यानात् तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ"विति सूत्रादस्य जीवस्यैश्वर्यादि तिरोहितम् । तेन भजनादिकं न भवति । "नायमात्मा बलहीनेन लभ्य" इति श्रुतेः । अतः पुनरैश्वर्यादिभावसम्पत्त्यर्थमित्यर्थः । अविद्यादोषनिवृत्त्यर्थंचेति । राश्येकदेशस्यांशस्य विभाजिकाऽविद्या, तस्याश्च भगवद्विच्छेदापादकत्वेन दोषरूपत्वम् । तन्निवृत्त्यर्थमित्यर्थः । नचैश्वर्यादिसम्पत्तावविद्यादोषनिवृत्तौ च भगवद्रूपत्वे एव सिद्धे भजनानुपपत्तिस्तदवस्थैवेति वाच्यम् । तत्र भगवत्कृतस्यैव तरतमभावस्य स्थितत्वात् । "स्वरूपेणावतारेण लिङ्गेन च गुणेन च । तारतम्यं न स्वरूपे देहे वा तत्क्रियासु वेति" श्रीमदाचार्योक्तौ मुख्यभक्तानां भगवद्देहेन गुणेन च साम्यमस्ति । भगवदवतारवत् । तद्वदेव तेषां प्रादुर्भावात् । भगवता सह नृत्यादिसामर्थ्यस्य विद्यमानत्वाच्चिह्नसाम्यम् । गुणाः सौन्दर्यादयः । तत्साम्यं तु स्पष्टमेव । "ब्रह्मैव सन् ब्रह्माप्येतीति" श्रुतेः । एवं भगवत्साम्येऽपि भगवत्कृतं तत्र तारतम्यमस्तीति मन्तव्यम् । उत्कर्षापकर्षवैचित्र्येण विना सम्यग्रमणासिद्धेः । अत एवाग्रे आहुः श्रीमदाचार्यचरणाः— "तथापि यावता कार्यं तावत्तस्य करोतिही"ति । अत एव बाललीलादयो युक्तरूपा भवन्तीति दिक् ।

एवं सति सुखेन भजनोपपत्तिः । तेन, पुष्टि-पुष्टिपुष्टि-मर्यादा चेत्यधिकारत्रये यथायोग्याधिकारे सिद्धे, अलौकिकसामर्थ्यं पुरुषोत्तमसायुज्यं, सेवोपयोगी देहो वैकुण्ठादिष्विति सेवाफलोक्तं यथायोग्यं फलं भविष्यतीति भावः । भाव इति । श्रुतेर्भाव इत्यर्थः । पुनराशङ्कन्ते ।

नन्विति । भजनपर्यवसायिनीति । "तस्मान्मद्भक्तियुक्तस्य योगिनो वै मदात्मनः । न ज्ञानं न च वैराग्यं प्रायः श्रेयो भवेदिहे"त्यादिवाक्यैः कर्मज्ञानोपासनादीनामप्रयोजकत्वाद् भजनमात्रपर्यवसायीत्यर्थः । तस्मिन्

भावात् तदनुपपत्तिरितिचेन्न । तत्रापि पुरुषोत्तमांशानां तेषां लीलार्थं ततो वियुक्तानां पुनः संबन्धेन फलानुभवार्थं भजनस्यावश्यकत्वात् ।

नन्वेवं भजनस्य साधनत्वे पुष्टिमार्गत्वानुपपत्तिरितिचेन्न ।

---

पुष्टिमार्ग इति । पुष्टिः पोषणम् । अनुग्रह इति यावत् । पोषणं तदनुग्रह इत्युक्तेः । मार्गपदनिरुक्तिस्तु पूर्ववज्ज्ञेया । निवर्त्यदोषाभावादिति । निवर्त्यानामविद्यागुणानां कामादीनां दोषरूपाणां निवर्त्यत्वेनाभावादित्यर्थः । "अपिचेत् सुदुराचारो भजते मामनन्यभाक् । साधुरेव स मन्तव्यः सम्यग्व्यवसितो हि सः" इति श्रीमत्प्रभुचरणोक्तेः, अजामिलादौ दर्शनाच्च । तदनुपपत्तिरिति । तथाचाकस्मिके श्रेयसि सिद्धे भजनप्रयोजनाभावाद्भजनाऽनुपपत्तिरित्यर्थः । नेति निषिध्य समादधते । तत्रापीति । निवर्त्यदोषाभावेऽपि तेषां जीवानां ततः पुरुषोत्तमाद्वियुक्तानां पुनर्भगवत्सम्बन्धेन तदनुभावार्थकत्वेन फलानुभवः प्रयोजनम् । यतो, लीलार्थमेव भगवता वियुक्ताः कृताः । तदर्थं भजनस्याऽऽवश्यकत्वेन सप्रयोजनकत्वानुपपत्तिरित्यर्थः । नच तर्ह्यविद्यानिवृत्त्यर्थं चेत्यनुपपन्नमिति वाच्यम् । तन्निवृत्तावेव फलानुभवात् । नच रासलीलायां कामादीनामपेक्षितत्वान्न तन्निवृत्तिरिति वाच्यम् । तस्यास्तद्गुणानां च तत्रालौकिकत्वेन लौकिकायास्तस्या निवृत्तेः । "श्रिया पुष्ट्या गिरा कान्त्या कीर्त्या तुष्ट्येलयोर्जया । विद्ययाऽविद्यया शक्त्या मायया च निषेवितमि"त्युक्तेः । नच तस्या बन्धनैकस्वभावत्वेन तत्र स्थिताया बन्धः सम्भवतीति वाच्यम् । लौकिकस्वभावं त्यक्त्वा अलौकिकतया तत्र तस्याः स्थितेः । "विलज्जमानया यस्य स्थातुमीक्षापथेऽमुयेत्यु" क्तेस्तदधिष्ठात्र्या मायायास्तत्र विलज्जमानत्वं तदा किं वाच्यमविद्यायाः । तथाच सभयतया सलज्जतया च स्वस्वभावं त्यक्त्वा यावद्रासलीलाकार्यं तदनुकूलमेव करोति । "भगवानपि ता रात्रीः शरदोत्फुल्लमल्लिकाः । वीक्ष्य रन्तुं मनश्चक्रे योगमायामुपाश्रित" इति न कोऽपि शङ्कालेशः । तथाच लौकिकस्वभावायास्तस्यास्तु निवृत्तिरेवोचिता । तन्निवृत्त्यभावे फलानुभवासिद्धेः । अतस्तन्निवृत्तेरावश्यकत्वेन तदर्थं भजनस्यावश्यकत्वात् तदुपपत्तिर्युक्तेति तदनवद्यम् ।

एवं सति भजनस्याविद्यानिवृत्त्यर्थत्वेन फलानुभवार्थत्वेन च साधनत्वापत्तावाशङ्कन्ते—

नन्वेवमिति । तथाच तस्य साधनत्वेन फलस्य तत्साध्यत्वेन पुष्ट्ये-

भजनस्य भावरूपत्वेन फलरूपत्वात् तस्य साधनत्वेऽपि न क्षतिः ।
पुष्टिमार्गः स एव यत्र फलं स्वयमेव साधनमित्यसकृदुक्तमाचार्यैः ।

कसाध्यत्वाभावात् पुष्टिमार्गः, तस्यानुपपत्तिः । तेन मार्गेण भगवति गमनाभावादित्यर्थः । न हि पुष्टिः स्वकृतिसाध्या भवति, किन्तु भगवदिच्छैकसाध्या । राजसेवकयोरिव । अतो या निःसाधनफला सैव पुष्टिः । अतः कर्मज्ञानोपासनादिमद्भजनस्यापि साधनत्वेन पुष्टिमार्गस्य तदसाध्यत्वात्तदनुपपत्तिरिति भावः । नेति, निषिध्य समादधते । भजनस्य तत्र भावरूपत्वेनेति । भजनं च भक्तिशब्दवाच्या क्रिया । "प्रकृतिप्रत्ययौ सहार्थं ब्रूतस्तयोस्तु प्रत्ययः प्राधान्येने"ति नियमादत्र धातुसामान्यार्थे शक्तोऽपि क्तिन्प्रत्ययो भजिसमभिव्याहारात् प्राधान्येन भजनक्रियां वक्ति । सा च सर्वात्मिका । सेवापदं च सातत्याभीक्ष्ण्यान्यतरपूर्वककायिकव्यापारविशेषपरिचर्यारूपेरूढम् । स्त्रीसेवा औषधसेवेत्यादिप्रयोगदर्शनात् । मत्सेवया प्रतीतश्चेत्यादिस्वतन्त्रसेवाबोधकैर्वाक्यैस्तदवगमात् । केवलक्रियाया जलताडनादिवन्निष्फलत्वेन तत्र प्रेमपूर्वकत्वमभिव्यनक्ति भक्तिशब्दः । मत्सेवया प्रतीतश्चेत्यादिवाक्येषु सर्वदा पूर्णत्वादिकथनात् प्रेमपूर्वकत्वस्यापि लाभात् । "वशीकुर्वन्ति मां भक्ताः सत्स्त्रियः सत्पतिं यथे"त्यादावपि दम्पतिदृष्टान्तेन तल्लाभाच्च । अन्यथा तस्याः कायक्लेशजनकत्वेन स्वतः पुरुषार्थत्वोक्तिभङ्गप्रसङ्गात् । एवं सति प्रेम्ण एव प्रयोजकत्वेन प्रत्ययार्थत्वेन च प्राधान्याद् भजनस्य तद्रूपत्वेन भावरूपत्वम् । तस्य मनोधर्मत्वादिति व्याकरणशास्त्रसरणिः । "सा पराऽनुरक्तिरीश्वरे" इति शाण्डिल्यसूत्रादनुरक्तिरूपायास्तस्या भावरूपत्वेन तद्वाच्यार्थे अभिव्यङ्ग्यतया भजनस्यापि तथा, यतो भावरूपत्वमत एव साधनरूपत्वं फलरूपत्वमुभयमपि सम्भवति । भावे सिद्धे अग्रे फलस्य तदतिरिक्तस्याभावात् । "अनिमित्ता भागवती भक्तिः सिद्धेर्गरीयसी"ति तत्स्वरूपलक्षणात् । तच्च प्रेम भक्तिरसस्य शृङ्गाररसस्य स्थायिभावरूपम् । भावलक्षणं च रसानुकूलो विकारो भावः । स्थायित्वञ्च तस्य चरमसमयपर्यन्तस्थायित्वात् । अत एवाऽपुष्टपुष्टस्य तस्यैव साधनफलरूपत्वं युक्तम् । अपुष्टो भावरूपः पुष्टो रसरूप इति रसशास्त्रमर्यादा । स्थायी भावो रसः स्मृत इत्युक्तेः । तथाच पुष्टापुष्टोभयदशायामपि न रसत्वक्षतिः । यथा पूर्वमङ्कुरितस्य वृक्षस्य प्रौढदशावृत्तावपि वृक्षस्थितिरिति तदाहुः तस्य साधनत्वेऽपि न क्षतिरिति । तस्य फलरूपस्य साधनत्वेऽपि न फलरूपत्वक्षतिरित्यर्थः । तथाच रसरूपं फलम् । तच्च तदेव पूर्वभावरूपं

अत एव पूर्वं प्रादुर्भूय संयोगानुभवं कारयित्वा विरहेणाऽऽन्तरभजनं संपादयितुं भगवत एव मथुरागमनरूपस्त्याग उच्यते ।

नन्वंशत्वेऽपि जीवानां तदात्मकत्वेनान्यूनत्वाद् भजनानुपपत्तिस्तदवस्थैवेति चेन्न। बहु स्यामिति श्रुतेः। क्रीडार्थं तथाऽऽविर्भा-

---

भूत्वा स्वकार्यं साधयतीत्यतस्तस्यैवावस्थाद्वयमिति बोध्यम्। वस्तुतस्तु प्रेम्णोऽवस्थात्रयं भवति, प्रेमासक्तिर्व्यसनं चेति। अत एव श्रीमदाचार्यचरणाः, "ततः प्रेम तथासक्तिर्व्यसनञ्च यदा भवे"दित्याहुः। पुष्टिमार्गः स एवेति। यत्र फलं स्वयमेव साधनमिति। अयमर्थः यदा हि भगवाननुगृह्णाति, न हि तत्र साधनापेक्षा। किन्तु महता साधनेनाप्यऽलभ्यमपि निःसाधनतयैव केवलं भगवत्प्रसादेनैव लभ्यं भवति। "किमलभ्यं भगवति प्रसन्ने श्रीनिकेतन" इत्युक्तेः। तथाचानुगृह्य भगवान् फलमेव ददाति। तच्च दोषबाहुल्यात् पूर्वमपरिपूर्णो भूत्वा तन्निवृत्तिरूपं साधनकार्यं कृत्वा पुनः पूर्णतया रसरूपो भवतीति भावः। तच्च भावरूपं रसरूपञ्च फलं भगवानेवेति राद्धान्तः। "रसो वै स" इति श्रुतेः। "स्थायी भावो रसः स्मृत" इत्युक्तेश्च। भावरूपत्वेन फलरूपत्वेन च साधनफलोभयरूपत्वमपि भगवति सिद्धम्। अत एव हि भगवानेव हि फलमिति श्रीमदाचार्यचरणाः। अतः सुष्ठूक्तं श्रीमद्धरिरायचरणैरपि, फलं स्वयमेवेति। स्वयं भगवानेवेत्यर्थः। स्वस्वरूपबलेन स्वप्रमाणं पुष्टिरित्युच्यते इति, "गतेरर्थवत्त्व"मिति सूत्रभाष्येऽपि। तथाच साधनानपेक्षत्वे सति साधनानन्यफला पुष्टिरिति लक्षणं बोध्यम्। शमदमादिसाधनव्यावृत्त्यर्थं सत्यन्तं पदम्। नचात्र श्रवणादीनां साधनत्वमिति वाच्यम्। तेषामप्यत्र प्रेम्णाऽविनाभावितेन फलरूपत्वात्, पौर्वापर्येणापि सम्भवाच्च। तत्र प्रमाणमाचार्योक्तिरित्याहुः। असकृदुक्तमाचार्यैरिति। सुबोधिन्यादावुक्तमित्यर्थः। एतदेव लीलानिदर्शनेनोपष्टम्भयन्त आहुः। अत एवेति। उच्यते। श्रीभागवतादावुच्यते इत्यर्थः।

पुनराशङ्कामाहुः—

नन्वंशत्वेऽपीति। साम्यात् सेव्यसेवकभावाभावेन तदनुपपत्तिरित्यर्थः। नेति निषिध्य समादधते बहु स्यामिति। न्यूनत्वसत्त्वे सेव्यसेवकभावसिद्धौ नानुपपत्तिस्तदवस्थेत्यर्थः। ननु सृष्टौ उच्चनीचभावेन प्रादुर्भावेच्छा, न तु मुक्तिदशायामतो न्यूनत्वस्याऽवास्तवत्वान्मुक्ति-

वान्नानुपपत्तिः काचित् । नन्वेवं तथाप्यनुपपत्तिरितिचेन्न । न्यूनत्वविशिष्टस्यैव तस्याविर्भावात् ॥

ननु तदेच्छायाः करणत्वानुपपत्तिरितिचेन्न । इच्छाया ह्याविर्भावे कारणत्वं, न स्वरूपान्यथाकृतौ । तस्मान्मुक्तावपि कौस्तुभरूपेण स्थितिरिति भूषणरूपत्वेन न्यूनतायामन्यस्य तथात्वे किं वाच्यम् ? इति कैमुतिकन्यायेन तदात्मकत्वेऽपि तदंशत्वेन न्यूनत्वं वास्तवमेवेति भावः । अत एवांशानामपरिमितानां सृष्टौ वह्निविस्फुलिङ्गवन्निर्गमेऽपि न न्यूनता । हस्ताद्धस्तान्तरस्थिताविव सद्रूपे प्रपञ्चे स्थितत्वान्न न्यूनताशङ्कापीत्यर्थः । नन्वेवं जीवानां

---

दशायां जीवन्मुक्तौ साम्यमन्यथा लय इति सेव्यसेवकभावानवसरेण भजनानुपपत्तिस्तदवस्थैवेत्याशङ्कन्ते । नन्वेवमिति । नेति निषिध्य समादधते । न्यूनत्वविशिष्टस्यैवेति । तस्येति । जीवस्येत्यर्थः । प्रथमतोऽवधिपर्यन्तं पुष्टिसृष्टित्वेनैव भगवता विचारितत्वादिति भावः । "एष उ एव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषते, एष एवासाधु कर्म कारयति तं यमधो निनीषती"त्यादिश्रुतेः । अन्यथा भक्तिमार्गोच्छेदप्रसङ्गेन, "मत्सेवया प्रतीतञ्च" इत्यादिवचनव्याकोपापातात् ।

नन्वेवं सति न्यूनत्वस्य वास्तवत्वे तत्र वस्तुस्वभाव एव कारणं, न त्विच्छेत्याशयेन आशङ्कामाहुः—

नन्विति । नेति निषिध्य समाधानमाहुः । इच्छाया इति । वस्तुस्वभावोऽपीच्छाकृत एव वस्तुनोऽपि कर्तृपरतन्त्रत्वाद् यादृशं वस्तुस्वरूपं यादृशश्च स्वभावस्तादृशाविर्भावे एवेच्छायाः कारणत्वं, न तु तत्स्वरूपान्यथाकृतौ । प्रयोजनाभावेन तादृशेच्छाया एवासत्त्वादित्यर्थः । तस्मादिति । स्वरूपान्यथाकृतौ इच्छायाः कारणत्वाभावाद्धेतोः । कौस्तुभरूपेणेति । "चैत्यस्य तत्त्वममलं मणिमस्य कण्ठ" इत्याद्युक्तेः । कैमुतिकन्यायस्तु स्पष्ट एव । भाव इति । "बहु स्यां प्रजायेये"ति श्रुतेर्भाव इत्यर्थः । अथ वास्तवत्वं युक्त्यैवोपष्टम्भयन्ति । अत एवेति । वास्तवत्वादेवेत्यर्थः । अपरिमितानाम्—असंख्यातानाम् । वह्निविस्फुलिङ्गवन्निर्गमेऽपीति असकृन्निर्गमेऽपीत्यर्थः । न न्यूनतेति । भगवतीति शेषः । तदेव दृष्टान्तेन द्रढयन्ति । हस्ताद्धस्तान्तरस्थिताविवेति । न्यूनताशङ्कापीति स्पष्टोऽर्थः । पुनराशङ्कन्ते नन्वेवमिति । अंशत्वाविशेषाद्दैवासुरविभागः कथमित्यर्थः । क्रीडार्थं

सहजहर्षंशत्वे दैवासुरविभागस्तेषु कथमिति चेत्, क्रीडार्थं तदिच्छयेति गृहाण । अत एव फलदशायामपि न्यूनत्वसत्त्वेन भजनस्य फलता । अन्यथा स्वतन्त्रभक्तिमार्गोच्छेद एव स्यात् । अतो जीवेषु सहजन्यूनत्ववद् ब्रह्मणि सर्वाधिकत्वम् ।

ननु तथापि न्यूनाधिकभावः कथम् ? । अंशत्वेन सत्त्वादिति चेत् । अत्र वदामि । भगवान् भेदेन क्रीडार्थं प्रपञ्चरूपमात्मानमाविर्भावयति । अत्रायं प्रकारः । सच्चिदानन्दं ब्रह्म । तस्य च धर्मरूपं तात्त्रितयात्मकमक्षरम् । तस्य च चिदंशा जीवाः क्रीडार्थमिच्छया कृताः । अन्यथा क्रीडावैचित्र्याभावेन न स्यात् । अत एव जडजीवान्तर्यामिष्वेकैकांशतिरोभावस्तथेच्छा च । अतः समुदितपृथक्कारणं क्रीडार्थम् । तत्र मूलरूपेण क्रीडा बन्धमोक्षाभ्यामेव । तदिच्छयेति स्पष्टम् ।

तत्रापि पूर्वपक्षमाहुः—

ननु तथापीति । न हि केवलं विभाग एव, किन्तु तत्र न्यूनाधिकभावः । स च समत्वात् कथं सम्भवतीत्यर्थः । तथाचात्र समाधानं वक्तुमाहुः—अत्र वदामीति । समाधानं कथयामीत्यर्थः । अभेदेनेति । कारणरूपः कार्यस्वरूपश्च स्वयमेवेत्यभेदेनेत्यर्थः । अन्यथेति । पृथक्करणे वैचित्र्याभावेनेति । पृथकरणं वैचित्र्यार्थम् । वैचित्र्यं चात्र न्यूनाधिकभावरूपम् । तथाच न्यूनाधिकभावरूपेण वैचित्र्याभावेनेत्यर्थः । अत एवेति वैचित्र्यादेवेत्यर्थः । एकैकांशतिरोभाव इति । एकैकांशाधिक्येन तिरोभाव इत्यर्थः । सच्चिदानन्दरूपोऽन्तर्यामी । तदपेक्षया जीवे एकस्यानन्दांशस्येति भावः । जडे चिदानन्दयोस्तिरोभाव इत्येकाधिक्यमिति भावः । तथेच्छा चेति । एकाधिक्यांशतिरोभावेच्छेत्यर्थः । तादृशतिरोभावस्य स्वतन्त्रतानिराकरणार्थं चकारः । अत इति । इच्छात इत्यर्थः । समुदितरूपस्येति । स्वस्य समुदिरूपस्येत्यर्थः । ननु स्वरूपस्य पृथक्कृतिः कथं भवेदित्याशङ्कायामाहुः—तच्चेत्यादि । तत्रेति । स्वरूपस्य पार्थक्ये सति । ननु तथा सति स्वस्य भोक्तृत्वानुपपत्तिरितिचेत्तत्राहुः—मूलरूपेणेति । क्रीडा बन्धमोक्षाभ्यामिति । क्रीडा रमणम् अविद्यया विद्यया चेत्यर्थः । नच तर्हि मूलरूपस्यापि बद्धमुक्तत्वाभ्यां जीवतुल्यतापत्तिरिति वाच्यम् । बद्धमुक्तव्यतिरिक्तस्वरूपेणैव तस्य स्थितत्वात् । अंशित्वेन तद्भेदाच्च ।

ततो लीलानित्यत्वसिद्धये बन्धमोक्षावपि नित्यौ वाच्याविति दैवासुरविभागः ।

ननु तथापि किं दैवत्वमसुरत्वं चेतिचेत्, उच्यते, सृष्टौ शक्तेः पृथक्करणेन तत्परिगृहीतत्वमसुरत्वं, स्वपरिगृहीतत्वं दैव-

"बद्धो मुक्त इति व्याख्या गुणतो मे न वस्तुतः । गुणस्य मायामूलत्वान्न मे मोक्षो न बन्धनमि"ति प्रभुचरणोक्तेः । तत इति । यतो बन्धमोक्षाभ्यां क्रीडा, तस्मादित्यर्थः । लीलानित्यत्वसिद्धय इति । लीलोपकरणस्य प्रपञ्चस्य लीलायाश्च नित्यत्वात् तत्सिद्धय इत्यर्थः । प्रपञ्चस्य प्रपञ्चरूपस्य ।भगवद्रूपत्व(१)निरूपणेनाऽस्मिन् ग्रन्थ एव पूर्वं निरूपितम् । "तदेतदक्षयं नित्यं जगन्मुनिवराऽखिलम् । आविर्भावतिरोभावजन्मनाशविकल्पवदि"त्यादिवाक्यानि बहूनि सन्तीति दिक् । भाष्यनिबन्धविद्वन्मण्डनादिषु विस्तरेण निरूपितं श्रीमदाचार्यचरणैः । अत इतोऽधिकप्रेप्सावद्भिस्तत्र द्रष्टव्यम् । उपकरणस्य नित्यत्वाल्लीलाया नित्यत्वं कैमुतिकन्यायसिद्धम् । अन्यथा उपकरणनित्यत्ववैयर्थ्यापातात् । भगवद्भोक्तृत्वस्यानित्यतापत्तेश्च । लीलाया नित्यत्वं तु, "जयति जननिवासो देवकीजन्मवादो यदुवरपरिषत्स्वैर्दोर्भिरस्यन्नधर्मम । स्थिरचरवृजिनघ्नः सुस्मितः श्रीमुखेन व्रजपुरवनितानां वर्द्धयन् कामदेवमि"ति वाक्ये जयतीति वर्त्तमानप्रयोगेण अस्यन्निति वर्धयन्निति च शत्रन्तपदाभ्यां वर्तमानत्वं श्रीशुकैरुक्तमित्यादि विवृतं विद्वन्मण्डने श्रीमद्विठ्ठलाचार्यचरणैर्ग्रन्थविस्तरभियाऽत्र न प्रपञ्च्यत इति दिक् ।

एवं सति लीलाया नित्यत्वेन तत्सिद्धये बन्धमोक्षावपि नित्यौ वाच्याविति, "एकस्यैव ममांशस्य जीवस्यैव महामते । बन्धोऽस्याविद्ययानादिर्विद्यया च तथेतर" इति भगवदुक्तेः । तदनन्तरं बद्धमुक्तवैलक्षण्यनिरूपणे, "यो विद्यया युक् स तु नित्यबद्धो विद्यामयो यः स तु नित्यमुक्तः" इत्युक्तेश्च । इतीति । बद्धमुक्तप्रकारेणेत्यर्थः । इति दैवासुरविभाग इति । यद्यप्यंशत्वेन समत्वं, तथापि बन्धमोक्षाभ्यां नीचोच्चत्वस्य स्वेच्छया क्रीडार्थं दैवासुरविभाग इति भावः

दैवत्वस्यासुरत्वस्य च लक्षणं वक्तुमाशङ्कन्ते—

नन्विति । उच्यते इति । तल्लक्षणं कथ्यते इत्यर्थः । सृष्टाविति । शक्तेः पृथक्करणेनेति । कार्यार्थं शक्तेर्मायायाः पृथक्करणम् । पार्थक्यं च, अहं

(१) नित्यत्वमित्यादिः ।

त्वमिति विवेकः । भगवदंशत्वेऽपि मोहार्थं सृष्टौ पृथग्भूतया परिगृहीतत्वादासुराणां सम्पुटनिःसारितस्य चोरहस्तपतितस्योपायसहस्रैरप्राप्यस्य द्रव्यस्य सम्पुटप्रवेशाभाव इव पुनर्भगवति प्रवेशाभावः । दैवानां तु करकालितस्य रत्नस्य समाकृतस्य पुनः सम्पुटप्रवेश इव भगवति प्रवेशः । अत एव सृष्टिमात्रमसुराणां भगवतोऽन्यन्माययैव । तत्कृतमोहेन ज्ञानभक्तिरूपशक्तिद्वयकार्याभावेन सायुज्यासंभवात् । अत एव भगवता, मामप्राप्यैवेत्युक्तम् । तयोरेव

---

ममेत्यादिकार्ये अनुमीयते । तत्परिगृहीतत्वमिति । शक्तिपरिगृहीतत्वमित्यर्थः । तथाच न ते कदापि मोक्षमार्गानुयायिनो भवन्ति, तत्प्रतिबन्धका एवेत्यसुरत्वमित्यऽर्थः । स्वपरिगृहीतत्वमिति । स्वेन भगवता परिगृहीतत्वमित्यर्थः । परिग्रहो विवाहः । "वशे कुर्वन्ति मां भक्त्या सत्स्त्रियः सत्पतिं यथा," "यमेवैष वृणुत" इत्याद्युक्तेः । तथाच भगवता विवाहिता देवाः, मायया विवाहिता आसुरा इति विवेकः । विवाहश्च द्वयोरप्यऽपरित्यागे प्रयोजकः । तथाच भगवता परिगृहीतास्ते कदाऽपि भगवन्तं न त्यजन्ति । भगवानपि तान् कदाऽपि न त्यजति । अन्यथैकत्र पातिव्रत्यहानिरेकत्र पुरुषत्वहानिरिति न कदापि परित्याग इति । दैवत्वं देवसम्बन्धित्वमित्यर्थः सत्स्त्रियः सत्पतिं यथेत्यत्र द्वयोरपि सत्पददर्शनात् । असुरमाययोरपरित्यागस्तु भगवदिच्छाकृत एव । "मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिमि"त्युक्तेरिति दिक् ।

एवश्चासुराणां न कदापि भगवत्प्राप्तिः । "न मां दुष्कृतिनो मूढाः प्रपद्यन्ते नराधमाः । माययाऽपहृतज्ञाना आसुरं भावमाश्रिता" इति भगवतोक्तेः । दैवानां तु साहजिकीति दृष्टान्ताभ्यामुपपादयन्तआहुः—भगवदंशत्वेऽपीति । भगवति प्रवेश इत्यन्तं स्पष्टम् । अत एवेति । चोरहस्तपतितत्वादेवेत्यर्थः । अन्यदिति । अन्यलयमपि मायया मायायामेवेत्यर्थः । तत्कृतमोहेनेति । मायाकृतमोहेनेत्यर्थः । ज्ञानभक्तिरूपशक्तिद्वयकार्याभावेनेति ज्ञानभक्तिरूपद्वयाभेर्गवच्छक्त्योः कार्यं सायुज्यादि तदभावेनेत्यर्थः । सायुज्यासंभवादिति । भगवत्सायुज्यासम्भवादित्यर्थः । अत एवेति । सायुज्यासम्भवादेव । मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिमि"ति । अधमगतिश्च मायायामन्धन्तमःप्रवेश एव । "असुर्या नाम ते लोका अन्धेन तमसा वृताः । तांस्ते प्रेत्याभि-

तत्प्राप्तिहेतुत्वेन तेषु तदभावात्। तथाच पुरुषांशबीजस्य स्त्रियां प्रवेशे तद्गृहीतस्य पुनः पुरुषाप्रवेश इव तेषां भगवति अप्रवेशः। तथाऽपि पुत्र इव तत्रापि व्यवहारो लोके वेदे च भगवदंशत्वमादायैव। एतेन प्रकृतिसम्बन्धादंशत्वमपि व्यावहारिकमिवाभूदिति निरूपितम्।

ननु तथापि प्रकृतेस्तच्छक्तित्वेन तदभिन्नाया आनन्दरूपत्वेन तत्र प्रविष्टानामानन्द एवेति न कथं तत्प्राप्तिरितिचेन्न, भगवत एवासुरेषु स्वानन्दरूपस्य तस्यामप्रकटनात्। अत आनन्दरूपप्राकट्याभावान्न तेषामानन्दगन्धोऽपीति बुद्ध्यस्व। अन्यथा भक्तानामिवानन्दरूपदर्शने दैवेतराणामपि आनन्दानुभवः स्यात्। अतस्तद्रूपाप्राकट्यमेव तत्रेति मन्तव्यम्। अत एव, मम मायेति, राक्षसीमासुरीञ्चैवेति वाक्यद्वयबोधितसम्बन्धतदभावाभ्यामेव भगवता दैवासुरमाययोर्भेद उक्तः। मोहोऽप्युभयत्र कार्यभेदेन भिन्न एव।

---

गच्छन्ति ये केचात्महनो जनाः" इति ईशोपनिषच्छ्रुतेः। निरुक्तमेव व्याख्यातवन्त आहुः। तयोरेवेत्यादि। तयोर्ज्ञानभक्त्योरेव। एवेति निश्चितम्। तत्प्राप्तिहेतुत्वे—भगवत्प्राप्तिहेतुत्वे। तेषु—असुरेषु। तदभावात्। ज्ञानभक्त्योरभावादित्यर्थः। तथाच निरूपितमित्यन्तं स्पष्टम्।

पुनराशङ्कन्ते—

ननु तथापीति। तथापि प्रकृतिसम्बन्धेऽपि,प्रकृतेर्मायायास्तच्छक्तित्वेन तदभिन्नायाः,भगवच्छक्तित्वेन भगवदभिन्नाया इत्यर्थः। तत्प्राप्तिः भगवत्प्राप्तिरित्यर्थः। नेति निषिध्य समादधते। भगवत एवेति। तस्यामिति। मायायामित्यर्थः। अप्रकटनादिति। अप्रकटने इच्छैव कारणम्। अतः—अप्रकटनात् तेषामसुराणाम्। तत्र बाधकयुक्तिमाहुः—अन्यथेत्यादि। अन्यथा आनन्दरूपप्राकट्ये सति दैवासुरयोर्भेद एव न स्यादिति भावः। अतः—निरुक्तयुक्तेः। तद्रूपाऽप्राकट्यम्—आनन्दरूपस्याऽप्राकट्यम्। एवेति निश्चितम्। तत्र—मायायामिति मन्तव्यम्। अत्रोपष्टम्भकमाहुः अत एवेत्यादि। अत एव निरुक्तयुक्तेः सम्मतत्वादेवेत्यर्थः। "दैवी ह्येषा गुणमयी मम माया दुरत्यये"ति सप्तमाध्याये, "राक्षसीमासुरीञ्चैव प्रकृतिं मोहिनीं श्रिताः" इति नवमाध्याये। सम्बन्धत-

एकत्र मोक्षार्थमपरत्र बन्धार्थमिति बोद्ध्यम् । अत एवासद्रूपत्वं तस्या इति बोधनाय क्रूरत्वार्थं राक्षसीत्वमप्युक्तम् । तेषां सहजक्रूरत्वादित्युपाख्याने तेषु च लक्षणत्वेन दयाभावप्रतिपादनात् । अत एव विना पशुघ्नादिति श्रीभागवतेऽपि लक्षणं तेषां तदेवोक्तम् । कार्यान्तराभावाय मोहिनीत्वमप्युक्तम् ।

ननु प्रकृतेः प्रलये भगवति लये तद्द्वारा तेषामपि लयात् परम्परया भगवत्सम्बन्धे कथं न तदानन्दानुभव इति चेन्न, प्रलये तत्संबन्धेऽपि व्यवधानेन तदानन्दाननुभवात् । अन्यथा प्रलयमुक्त्योर्भेद एव न स्यात् । प्रलयस्यैव मुक्तित्वे मुक्त्यर्थसाधनानुष्ठानप्रयत्नवैयर्थ्यापत्तेः । न हि कोऽप्यबालिशः क्लेशेन स्वलयाय

---

दभावाभ्यामेवेति । मम मायेति । षष्ठ्या सम्बन्ध उक्तः । प्रकृतिं मोहिनीं श्रिता इति प्रकृतिसम्बन्धकथनेन स्वसम्बन्धाभाव उक्तः, माययोर्भेद उक्तः । बोध्यमित्यन्तं स्पष्टम् । अत एवेति । मोहस्य भिन्नत्वादेवेत्यर्थः । तस्या इति, आसुर्या इत्यर्थः । तेषां क्रूरत्वे स्वभाव एव हेतुरित्याहुः— सहजक्रूरत्वादिति । इत्युपाख्यान इति तृतीयस्कन्धे अस्मिन् स्थले सुबोधिन्या विवरणेन तथा प्रतिपादनादित्यर्थः । अत एव-क्रूरत्वादेव । दशमस्कन्धे प्रथमाध्याये, "क उत्तमश्लोकगुणानुवादात् पुमान् विरज्येत विना पशुघ्नादि"ति भगवद्गुणानुवादे वैराग्यं आसुरो भावः । तत्र पशुघ्नपदेन क्रूरत्वं चासुराणां लक्षणमिति भावः । अन्यदप्युपष्टम्भकमाहुः— कार्यान्तराभावायेति । मोहातिरिक्तकार्यान्तराभावायेत्यर्थः । मोहिनीत्वमिति । प्रकृतिं मोहिनीं श्रिता इति । एषा आसुरी प्रकृतिर्मोहिन्येव, नान्यकार्यकर्त्रीति दैव्या प्रकृत्या अस्या भेदोऽप्युक्तः ।

असुराणां परम्परयाप्यानन्दानुभवो नेति वक्तुमाशङ्कन्ते—

नन्वित्यादि । नेति निषिध्य अननुभववादित्यन्तं समादधुः । अननुभवे बाधकयुक्तिमाहुः अन्यथेत्यादि । प्रलय आनन्दानुभवे प्रलय एव मुक्तिरिति वदेयुः प्राज्ञाः, न तु प्रलय मुक्त्योर्भेदमिति भावः । अन्यदपि बाधकमाहुः । प्रलयस्यैवेति । अबालिशस्तु मुक्त्यर्थं यतते, न तु प्रलयायेत्यर्थः । प्रलयस्य तु स्वत एव भावित्वात् प्रयत्नवैयर्थ्यापत्तिरित्यर्थः । तत्साधनविधायकशास्त्रवैयर्थ्यापत्तिरित्यप्यनुसन्धेयम् । न हीति । अबालिश इति । बालिशस्तु कोऽपि स्वारूढशाखाच्छेदनवद्यतत

यतेत। अतो मुक्तिर्भिन्नैव स्वरूपानन्दानुभवरूपा। प्रलयस्तु कूर्मीणामिवोदरवर्तित्वमात्रम्। स्वविषयानुभवश्च, न तावता आनन्दानुभवः। तस्य भक्तिसाध्यत्वात्। सा च भक्तिः स्नेहरूपेति तदानीं भगवद्धृदयस्थितिरेव। अत एव लक्ष्म्यादीनां तत्रैव स्थितिः। अत एव, "साधवो हृदयं मह्यमि"त्यादिवाक्यानि। "जयदेवोऽपि

---

इति संभावना तेन पूर्वपक्षिगर्हां सूचयत्ययमपिशब्दः। अतो यत्नयोग्यायोग्यभेदान्मुक्तिः सालोक्यादिरूपा भिन्नैव। स्वरूपानन्दानुभवरूपा पुष्टिमुक्तिः। सैवास्माकमभिप्रेतेत्याशयेनाहुः। स्वरूपानन्दानुभवरूपेति। ननु प्रलयस्वरूपं किमित्याकाङ्क्षायामाहुः। प्रलयस्त्विवति। तस्येति। आनन्दानुभवस्येत्यर्थः। स्नेहरूपेतीति। स्नेहो भक्तिः। "सा पराऽनुरक्तिरि"त्यादिनिरुक्तप्रामाण्यात्। तदानीमिति। स्नेहरूपभक्तिलभ्यस्वरूपानन्दानुभवयोग्यायां मोक्षदशायामित्यर्थः। भगवद्धृदयस्थितिरेवेत्यत्रोपष्टम्भकमाहुः अत एवेत्यादि। "वक्षोनिवासमकरोत् परमं विभूतेरि"त्युक्तेः। अत्राप्युपष्टम्भकमाहुः। अत एवेत्यादि। "साधवो हृदयं मह्यं साधूनां हृदयं त्वहम्। मदन्यत् ते न जानन्ति नाऽहं तेभ्यो मनागपि"। "यथाऽधनो लब्धधने विनष्टे तच्चिन्तयाऽन्यन्निभृतो न वेदे"त्यादीनीत्यर्थः। इदमेव स्नेहलक्षणम्। स्नेहस्य मनोधर्मत्वात्तादृशाधिकारे संपन्नानां भक्तानामपि तद्रूपत्वात्तेषां हृदयस्थितिः संभावितैव। अत्रायमर्थः। स्नेहो द्विविधः—शृङ्गाररसरूपो भक्तिरसरूपश्च। तत्रैष्टसर्मोहाजनितमनोविकृतिरपरिपूर्णरतिः प्रथमः। द्वितीय माहात्म्यज्ञानपूर्वकपदाविशिष्टलक्षणभक्ति भेदः। तथाच यथा रसरूपो भगवाँस्तथा भक्ता अपि द्विविधरसरूपाः व्रजभक्ता अपि द्विविधरसरूपाः व्रजभक्ता लक्ष्म्यादश्च शृङ्गाररसरूपाः, कौडिन्यादयोऽपि भक्तिरसरूपानारदादयः। तेषां हृदये तत्तत्स्नेहरूपो भगवाननुभावविभावसञ्चारिसात्विकैः परिपूर्णस्तत्तद्रसलीलां करोतीति हृदयस्थितिः। तेषां हृदयस्य भगवद्धामरूपाक्षरब्रह्मरूपत्वात्। पर्यवसानं तु शृङ्गार एवेति सूक्ष्मदृग्भिर्ज्ञेयम्। "सत्यं ज्ञानमनन्तं ब्रह्म यो वेद निहितं गुहायां परमे व्योमन् सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चितेति" श्रुतेः। अस्यार्थस्तु—परः पुरुषोत्तमः। "उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृत" इत्युक्तेः। परो मीयते दृश्यतेऽनेन इति परमः। तस्मिन् परमे व्योमन् व्योमनि। विभक्तिलोपश्छान्दसः। गुहायां व्यापिवैकुण्ठात्मके हृदयाकाशे, सत्यं ज्ञानमनन्तं धर्मविशिष्टं

राधामाधाय हृदये" इत्युक्तवान्। अतः प्रलये निद्रायामिवानेकज-न्मक्लेशापाय एवेति सर्वं सुस्थम् ।

निजाचार्यानुकम्पातः संशयोऽयं निराकृतः ॥
हरिदासेन तुष्यन्तु तेन ते स्वामिनो मम ॥ १ ॥

इति श्रीमद्वल्लभाचार्यान्वयगोस्वामिश्रीमद्धरिरायजिद्विरचितो
ब्रह्मवादः समाप्तिमसेधत् ॥

---

ब्रह्म यो वेद सः, विपश्चिता रसलीलानिपुणेन ब्रह्मणा पूर्णपुरुषोत्तमेन रसरूपेण सह सर्वान् कामान् रसमनोरथानश्नुते भुङ्क्ते इत्यर्थः । एत दानन्दमयाधिकरणे विशदीकृतं श्रीमदाचार्यचरणैरिति दिक् । एवञ्च भगवतो भक्ताभिलाषया भक्ता अपि भगवद्धृदये स्थिता इति बोध्यम् । नच पूर्णस्य भगवतोऽभिलाषाभाव इति वाच्यम् । उभयाभिलाषाभावे रसमर्यादाभङ्गप्रसङ्गात् । नचाभिलाषायां पूर्णत्वक्षतिरिति वाच्यम् । "रसो वै स" इति श्रुत्या स्वस्य रसरूपत्वेन रसलीलाकरणस्येष्टत्वेनाभि-लाषाया अपीष्टत्वात् । भक्तानामपि स्वस्वरूपत्वेनातिप्रियत्वेन चाभेदा-दक्षतेः । महतोऽवरेऽन्यस्मिन्नभिलाषायां क्षतिदर्शनात् । परस्पराभि-लाषायां तु अन्योन्यमनोरथपूर्णार्थमेवाभिलाषा, न तु वस्तुसापेक्षतयेति रसपूरणार्थैव सा । अतो न पूर्णत्वक्षतिशङ्काऽपि । "ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहमि"त्युक्तेः सर्वमनवद्यम्। हृदयस्थितौ जयदेवोक्तमपि प्रमाणमाहुः राधामाधायेति । गीतगोविन्द शृङ्गाररसवर्णनप्रबन्धे, "राधामा-धाय हृदये तत्याज व्रजसुन्दरीरि"त्युक्तवाञ्जयदेवः । उपसंहरन्त आहुः तत इति । अतः पूर्वोक्तयुक्त्या क्लेशोपाय एव, न तु मुक्तिवदानन्दानुभव इति भावः ।

समाप्तिं दर्शयितुमाहुः निजाचार्यानुकम्पात इति । निजाश्च ते आचा-र्याश्च तेषामनुकम्पा कृपा दयापरपर्यायरूपा। निरुपधिपरदुःखप्रहाणेच्छा च दया । तथा संशयनिराकरणे बुद्ध्यादिपरिश्रमरूपो यो दुःखस्तत्प्र-हाणेच्छारूपेत्यर्थं इति प्रकृतोपयोग्यर्थः। वस्तुतस्तु कृपायाः सामर्थ्यं महत् "मूकं करोति वाचालमि"त्यादि । तथाच संशयनिराकरणमनायासेन सू-चितम् । हरिदासेनेति । हरेर्दासः सर्वदुःखहेतुर्भगवतो दासेनाऽपि संशय-निराकरणरूपं दुःखहरणं युक्तमिति भावः । "संशयात्मा विनश्यती"त्यु-क्तेस्तस्य दुःखरूपत्वेन तन्निराकरणेऽनेन मोक्षोऽपीति

कृपालवो भवन्तीति सूचितम् । यतो हरिस्वभावा एव हरिदासाः। "स्वयं समुत्तीर्य सुदुस्तरं द्युमन् भवार्णवं भीममदभ्रसाहृदाः । भवत्पदाम्भोरुहनावमत्र ते निधाय याताः सदनुग्रहो भवानि"त्युक्तेः । यद्वा हरिरेव दासः । "नोद्धवोऽण्वपि मन्न्यूनो यद्गुणैर्नार्दितः प्रभुः नाहमात्मानमाशास" इत्याद्युक्तेः । हरेर्विना संशयनिराकरणसामर्थ्यासम्भवाद्धरिरेव दास इत्यपि सुवचम् । हरिवद्दास इति वा । स्वामिनो ममेति । अत्र स्वस्वामिभावसम्बन्धेन सेव्यसेवकभाव उक्तः। "आचार्यं मां विजनायादित्युक्ते"रीर्याचार्ययोरभेदात् ।अन्यथा, हरिदास इति विरुद्धं स्यात् । पतिद्वयापत्तौ व्यभिचारापातात् । तेन संशयनिराकरणेन ते आचार्यरूपाः प्रभुचरणास्तुष्यन्तु प्रसन्ना भवन्तु । प्रसादकारणीभूतत्वात्तुष्टेर्न काप्यन्यफलापेक्षेति भाव इति । अनेन पुष्टिः सूचिता ।

इति श्रुतिशताशयात्प्रभुवरैः सुसिद्धान्तिता-
न्मितादखिलबोधनाय हि मितः समुद्ग्रन्थितः ।
मया सुविशदीकृतो रसिकरायगूढाशयः
समाप्तिमगमच्छुभो य इह तैः सुसिद्धान्तितः ॥ १ ॥

शश्वत्प्रसादसुमुखः सकलः क्लेशो
नन्दगृहाभरणभूरमवद्विभूत्यै ।
स श्रीमनोजनितमोहनसंशयाऽऽसी-
न्ममूर्ध्नि गोपवरदृक्कमलप्रभावात् ॥ २ ॥

तेषु प्रसादसुमुखेषु किमप्यलभ्यं
नास्त्यत्र सत्सु भगवत्सु यतो हि यस्याम् ।
सौगन्ध्यहीनमपि शुक्तमभूत् सुपुष्पं
विद्वद्विहङ्गविरतिस्तु कदाऽपि न स्यात् ॥ ३ ॥

इति श्रीमन्निरस्तपरमततिमिरनिकरविकासितमुरारिचरणरतिसर-
सीरुहश्रीपुरुषोत्तमात्मप्रतिमूर्त्तिश्रीवल्लभविठ्ठलाचार्यान्वयश्रीम-
द्गोपेश्वराचार्यचरणपद्मपरिचरणप्राप्तमकरन्दमिलिन्दायमा-
नेनानुचरेण गोष्ठीशालोपनामकेन गोपालकृष्णेन
विरचितं श्रीमद्धरिरायकृतब्रह्मवादविव-
रणं समाप्तिमफाणीत् ॥
श्री हरिः ।

श्रीकृष्णाय नमः ॥

श्रीमदखण्डभूमण्डलाचार्यमहाप्रभुश्रीवल्लभाचार्यान्वयजगोस्वामि-श्रीव्रजनाथविरचितो

# ब्रह्मवादः



विशेषैः प्राकृतैः शून्यमप्राकृतविशेषवत् ।
अशेषोपनिषद्वेद्यं परं ब्रह्म वयं स्तुमः ॥ १ ॥

ननु कथमयमपूर्वः प्रस्तावः, ननु कथमस्यापूर्वत्वं 'निखिलप्रमाण-सिद्धत्वादिति चेत्, न. सर्वागमाविरुद्धत्वात्, तथाहि "सर्वं खल्विदं ब्रह्म तज्जलानिति" "अहं बहुस्याम्" "सहैतावानास" "अहं सर्वस्य जगतः प्रभवः प्रलयस्तथा" "जन्माद्यस्य यतः शास्त्रयोनित्वात्" इत्यादि श्रुतिस्मृतिसूत्रैः सर्वस्यापि जगतो ब्रह्मात्मकत्वेवधारिते तदन्तःपातिनामपि तेषां तत्त्वमेवेति कथं विशेषाणां प्राकृतत्वम् ? कथं वा तन्निषेध इति चेत्, सत्यम्, "स एकाकी न रमते" "स द्वितीयमैच्छत्" "अहं बहुस्याम्" इतिश्रुत्येकवाक्यतायां रमणार्थमेव नामरूपवैचित्र्येण स्वाविर्भावेच्छां कृतवानित्यर्थो लभ्यते । वैचित्र्यं चोच्चावचत्वकृतम्, तच्च न्यूनाधिकांशमन्तरा नसम्भवतीत्यनन्तशक्तित्वात् सच्चिदानन्दांशानेव यथानुरूप्येण तिरोभाव्य जडजीवान्तर्यामिरूपेण स्वयं प्रादुर्भूतः "यथा सुदीप्तात्पावकात्(१)" इति मुण्डकश्रुतेः । अविर्भावस्तु विद्यमानस्य वस्तुनोऽनुभवविषयतायोग्यत्वम्, तदयोग्यत्वं च तिरोभावः । अत्रानुभवस्तु जैवो ब्राह्मः, जीवान्तर्यामिसाधारणोवा । तत्र तिरोहितचिदानन्दत्वेजडत्वम् । तिरोहितानन्दत्वे जीवत्वम् । प्रतिबिम्बत्वादिरूपमपीदमेव ज्ञेयम् । आविर्भूतानन्दत्वे ब्रह्मत्वम् । तदेतदुक्तम् "आभासप्रतिबिम्बत्वमेवं तस्य" इत्यादिनाऽऽचार्यचरणैर्निबन्धे । अतिरोहितसच्चिदानन्दांशत्रयत्वमन्तर्यामित्वमिति । एवमेव भगशब्दवाच्यानामैश्वर्यादिषण्णामपि *धर्माणां तिरोभावमविद्यासम्बन्धेन जीवेकृतवान् । तथैव बन्धो जन्ममरणदेशादिरागरूपं विपरीतज्ञानञ्चाविद्ययैव । "बन्धा·

---

(१) यथेत्यारभ्यश्रुतेरित्यन्तम् पं० रमानाथभट्ट सम्पादितपुस्तके न दृश्यते ।

(*) ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः ।
ज्ञानवैराग्ययोश्चापि षण्णां भग इतीरणा ॥

स्याविद्यये"ति वाक्यात् जीवस्यैव । नान्ययोः प्रयोजनाभावात् । "प॰ राभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ" इति वैयाससूत्रादपि तथा । जडे तु चित्तिरोभावादैश्वर्यादीनामपि तथा, चेतनधर्मत्वात्ते॰ षाम्; तथा चैतादृशस्य जीवस्याविद्यकं ब्रह्मस्वरूपे तद्धर्मेषु च विपरी॰ तज्ञानं भवति । तच्च जडजीवरूपे ब्रह्मण्यब्रह्मत्वेन ज्ञानम् । इदमेव स्वरूपाज्ञानम् । सत्यत्वाद्यनेकालौकिकधर्मेषु चासत्यत्वविकारित्वाद्य- नेकलौकिकत्वेन ज्ञानम् । एवं च, सत्यविद्यासम्बन्धेन विषयीकृता लौकिका ये जडजीवधर्मास्त एव प्राकृतविशेषाः, तेषामनाश्रयत्वात्तैः शून्यमित्यर्थः । प्रकृतिसम्बन्ध सहकृतेन्द्रियज्ञानाविषयत्वम् प्राकृतत्व॰ मिति लक्षणं, सिद्धम् ।

प्रमाणं चात्र निषेधिका एव श्रुतयः । अयं च बाधोऽप्राप्तबाधस्ता॰ र्तीयः(१)नान्त्रदाशिमिको न्यायः(२) । एतेन निषेधश्रुतयोऽपि निषे(३)ध॰ विषयाप्राकृताविशेषा इति विषयप्रदर्शनमुखेन व्याख्याता ज्ञेयाः । यद्य॰ प्येतादृशानिषेधेनैव वक्ष्यमाणार्थसिद्धिस्तथापि विशेषत्वावच्छिन्नस्य प्राकृतत्वात्तदितरधर्माणां चाप्रसिद्धेर्विधायकश्रुतेश्चान्यपरत्वान्निर्विशे- षमेव ब्रह्मसिद्ध्यतीति मतान्तरव्युदस्तये विशेषणान्तरमाह—अप्रा॰ कृतेति । न प्राकृता अप्राकृताः प्रकृतिसम्बन्ध(४)सहकृतेन्द्रियाविष॰ याः । इहविशेषवदित्यर्थः । प्रमाणं चात्र पूर्वोदाहृतश्रुत्याद्याकलनीयम् ।

(५)ननु पूर्वोदाहृतश्रुत्याद्युदाहृतधर्माणामपि मायिकत्वात् कथं तथात्वमिति चेत्, मैवम्, तेषां (६)मायिकत्वे प्रमाणाभावात् । ननु निषेधश्रुत्यनुरोधात्तथाकल्प्यते, न तद्युक्तम्, निषेधश्रुतेः प्राकृत॰ विषयवत्वात्; अन्यथा पाणिपादादादिमत्वं निषिध्य 'जवन' इत्यादिना "परास्य शक्तिरि"त्यादिना च क्रियाज्ञानविधानवैयर्थ्यापत्तेः ।

नन्वन्तःकरणशुद्धिहेतूपासनार्थत्वात्तेषां न वैयर्थ्यम्, अपाणी॰

(१) तार्तीयोबाधः अप्राप्तबाधइत्यर्थः । सच दुर्बलप्रमाणबोधितस्य प्रबलप्रमाणेन बाधरूपः । विशे- षस्तु पूर्वमीमांसायां तृतीयाध्याये तृतीयपादे सप्तमाधिकरणे द्रष्टव्यः ।

(२) दाशमिकेति दाशमिकोदशमाध्यायस्थः प्राप्तबाधइत्यर्थः । स चपूर्वमीमांसायां दशमाध्याये प्रथ- मपादे प्रसिद्धः ।

(३) निषेधविषयाः प्राकृतविशेषविषयप्रदर्शनेति पं॰ रमानाथभट्ट सम्पादितपुस्तकपाठः ।

(४) सहितेत्यपिपाठः ।

(५) ननु पूर्वोदाहृतेति नास्ति(ग)पुस्तके ।

(६) समायिकत्व इति पं॰ रमानाथभट्टानां पाठः ।

स्याद्युक्तनिर्विशेषस्य ध्यातुमशक्यत्वात् । उपासनार्थमलौकिकाना-मेव तेषां विधानमिति चेत्, न, लोकप्रसिद्धत्वेन तेषां लौकिकत्वात् इति चेत्, नैवम्,पादादिसाधनरहितजवनादिक्रियाया अलौकिकत्वादेव स्वरूपज्ञानार्थं निर्धर्मकत्वविधानम्, उपास्त्यर्थं तु धर्मविधानमिति-वाक्यभेदापत्तेः । भ्रान्तिप्रतिपन्नविषयवैशिष्ट्येनोपासनया तच्छुद्धेर-जननाच्च । "अन्यथासन्त"मित्यादिनिन्दाश्रुतेः ।

नचासतोऽपि वैशिष्ट्यज्ञानं शाखाचन्द्रन्यायेन स्वरूपावगति-साधनमिति नैतद्दोषावसर इति वाच्यम्, दृष्टान्त वैषम्यात् । नहि (१)शाखावद्ब्रह्म प्रत्यक्षम्, यस्मिंश्चन्द्र इव धर्मा आरोप्यन्ते । नापि पाणिपादादिराहित्येऽपि जवनगृहीतृत्वादयो धर्माः काचित्प्रत्यक्षाः, तथा चाधिष्ठानाधिष्ठेययोरुभयोरप्यप्रत्यक्षत्वान्नदृष्टान्तबलेनतत्सिद्धिः । एतेनै-वाकाशदृष्टान्तोऽपि निरस्तः । किञ्च आरोपोह्यन्यधर्मस्यान्यत्रस्थाप-नम् । इत्थं च सति स्वानिरूप्यधर्माणां लोकाप्रसिद्धतयाऽन्यदीयत्वाभा-वादारोपलक्षणासङ्गतेर्नारोपोऽपि वक्तुं शक्यः । अत एव न निषेध-विषयत्वमपि तेषाम्, प्रतीतस्यैव निषेधात् । नच लोकेऽस्मदृगविष-यत्वेऽपि श्रुतिदृष्टिगोचरत्वेनारोपनिषेधौ नानुपपन्नाविति वाच्यम्, लो-के मूर्तामूर्तविलक्षणरूपसत्वे "द्वे वावे"ति श्रुतिविरोधात् । नचेदम-स्मज्ज्ञानानुवाद इति वाच्यम्, तथापि तयोरनुपपत्तेः । ननु कथमिति चेदित्थम्, श्रुतिर्हि दोषदुष्टदृष्ट्या किं तान्विषयीकरोति शुक्तिरजत-वत्, किंवा गुणदृष्ट्या, रजते रजतत्ववत् ? नाद्यः रजतवदन्यत्राद-र्शनात, तद्भ्रमानुपपत्तेः । नचास्मदादिवत्तासामविद्यवशाद्विपरीत-ज्ञानम्, जीववत्तासामविद्यासम्बन्धानुक्तेः । द्वितीये, तन्निषेधानुपपत्तेः । ब्रह्मणः सदैकरसत्वान्नावस्थाभेदः । किञ्चोपसनार्थमसदुपदेशे प्रतार-कत्वापत्तेः । उपासनार्थत्वे तु तेषां सर्वतः पाणिपादत्वादिधर्माणां ब्रह्मवदलौकिकत्वेन मनसाप्याकलयितुमशक्यत्वेन तद्रूपत्वेन तदुपास-नाया एवासिद्धेस्तन्निरूपणानर्थक्यापत्तेश्च निराकारोपासनवत्साका-रोपासनस्याप्यशक्यतया भक्षितेऽपि लशुने न शान्तोव्याधिरिति दोष-तादवस्थ्याच्च ।

ननूपासनायां हि वैशिष्ट्यज्ञानमपेक्षितम् तच्च नद्याः कच्छे गाश्चर-न्तीतिवत्, सौन्दर्यस्य तरङ्गिणीत्यादिवद्वा, तद्विषयकं श्रौतं शाब्दम-

(१) शाखावदित्यत्र शाब्दमिति प० रमानाथभट्टानां पाठः, सच स्पष्टमेव प्रामादिकः शाब्दब्रह्मण ... ।

स्त्येव, तेनैव च निराकांक्षा सा न तत्साक्षात्कार(१)मपेक्षत इति नानर्थक्यमिति चेन्नैतद्युक्तम् । तथाहि—उपासना हि किमिच्छा, क्रिया, (२)ज्ञानविशेषो वा ? तत्र नाद्यः सा किं तावद्धर्मविशिष्टस्य दर्शनेच्छा, तत्प्राप्तीच्छा वा, तज्जिज्ञासा वा ? त्रिसृणामपि वस्तु(३)तो निर्गुणत्वात् तस्य त्वन्मतेऽसम्भवात् । नद्वितीयः, सापि किं तदुद्देश्यिका होमदानादिरूपाक्रिया किं वा द्रव्याद्युपचारैस्तदर्चनादिरूपा ? आद्ये तादृशविधेरेवासम्भवान्न सा, द्वितीयेऽनिर्देश्ये तदसम्भवान्नतद्रूपापि सा । तृतीये तु मननरूपं तद्वक्तव्यम्, तथा सति निर्गुणस्यापि मननाचद्वैशिष्ट्यज्ञानमकिञ्चित्करमेव, नियमेन तत्करणत्वाभावात् । ननु नाकिञ्चित्करत्वम्, बुद्धिस्थैर्यद्वारा निर्गुणमननार्थमेव तन्मननाङ्गीकारादिति चेत्, न, सविशेषमननवन्निर्विशेषमननेऽपि तत्प्रतिपादकवाक्यार्थबोधातिरिक्तसाधनान्तरानपेक्षणात् । दृश्यतेऽपि चेदानींतनपरिव्राजकेषु विनैवोपासनां तत एव मननम् ।

अथ मायाजन्यत्वमेव मायिकत्वमिति चेत्, तत्र ब्रूमः । मायायाः समवायित्वमसमवायित्वं (नि.४)मित्तत्वं) वा ? नाद्यः मायाधर्मत्वापत्तेः समवेतानां समवायिधर्मत्वात् । न द्वितीयः, समवायिकारणे ब्रह्मणि कार्यैकार्थकारणैकार्थप्रत्यासत्त्योरभावात् । तृतीये तु दण्डचक्रादिवत्त्वे ब्रह्मणि वस्तुतस्तादृशधर्मसिद्ध्या निर्विशेषासिद्धेः । किञ्च दण्डादिवन्मायाया अपि कर्तृप्रयोज्यत्वनियमेन कर्तुः प्रयोजकत्वस्यावश्यं वाच्यत्वेन तस्य च मायासम्बन्धात्पूर्वमपि सत्त्वावश्यकत्वाद्धर्माणां मायिकत्वासिद्धेश्च ।

अथोपरागस्नानवज्जन्यताऽस्तु, तत्राप्युच्यते, तदा सा माया नित्योतकादाचित्की ? नित्यत्वेऽद्वैतहानिः, धर्माणां च तन्नित्यत्वेन नित्यत्वापत्त्या निषेधानुपपत्तिश्च । कादाचित्कत्वे तु तस्याः सनिमित्तत्वात्तदभावे न तत्र तद्वक्तुं शक्यम् ।

नन्वस्तु प्रागभाववदनादिसान्तत्वपक्षस्तृतीय इति चेत्, न, अनादित्वे प्रमाणाभावात् । ननु सादित्वस्यादृष्टत्वादेवानादित्वमनुक्तसिद्धमेव

(१) अपेक्षितमितीति पाठः (क) पुस्तके ।

(२) ज्ञानं, तद्विषो वेति पाठमादृत्य विकल्पचतुष्टयं पं० रमानाथशास्त्रिभिः प्रदर्शितम्, परमग्रिमग्रन्थविवेचनात्तदसमञ्जसमिति सुधीभिराकलनीयम् ।

(३) वस्तुन इति (क) पुस्तके ।

(४) कुण्डलितः पाठः कुत्राप्यादर्शपुस्तके न दृश्यते; परत्वग्रिमविकल्पत्रयसमाधनानुरोधेना-

"बन्धोस्याविद्यया" इति वाक्याच्च तथा, इति चेत्, सत्यम्, यद्यप्यस्मदादिदृष्टं न सादित्वं तथापि नानादित्वम्, तत्त्वे ब्रह्मतुल्यतापत्तेः, तथापि "न तत्सम" इति श्रुतिविरोधः "सदेवे"त्यादिश्रुतिविरोधश्च। ननु सान्तत्वान्नतत्तौल्यम्, न सर्वथाऽनादिसिद्धस्य सान्तत्वाभावात्, ब्रह्मवत्। जन्यस्यैव भावस्य सान्तत्वनियमात्। ननूक्तः प्रागभावदृष्टान्तः, नचैतद्युक्तम्, उक्तनियमानङ्गीकारे त्वेतद्दृष्टान्त(१)बलेनात्मनोऽपि सान्तत्वापत्तेः। दृष्टान्तस्याप्यसिद्धेः।

नन्विह कपाले घटो भविष्यतीति प्रतीत्यन्यथानुपपत्तिसिद्धः स इति चेत्, नैवम्, भविष्यत्कालावच्छिन्नघटसत्ताविषयत्वात्तत्प्रतीतेः। स्यादेतत्, *'इह कपाले नेदानीं घट' इतिप्रत्ययबलात् तत्सिद्धिरिति।* न ह्ययमत्यन्ताभावं ध्वसं वावगाहते, पूर्वस्य नित्यत्वात्, द्वितीयस्य केनाप्यकरणात्, अतः परिशेषात्तत्सिद्धिरिति चेत्, न, तिरोभावावगाहित्वात् तत्प्रत्ययस्य। न हि तिरोभावः प्रागभावः, ध्वंसेऽपि तथा प्रतीतेः। ननु कस्तर्ह्ययं तिरोभावः? अत्र ब्रूमः, विद्यमानस्य वस्तुनो दर्शनायोग्यत्वं तत्, तच्च भगवदैच्छिकम्। नन्वीश्वरेच्छाया नित्यत्वात्तन्नित्यतापत्तिरिति चेत्, न, सिसृक्षासञ्जिहीर्षयोर्नित्यत्वात्तयोरपि नित्यत्वापत्तेः। नन्विष्टापत्तिः, तयोरुभयोर्नित्यानुवृत्तेरिति चेत्, मैवम्, तयोरेकवस्तुविषयत्वेन तत्सर्गप्रलययोर्नित्यत्वापत्त्या तयोरन्यतरस्याप्यशक्यनिरूपणापत्तेः, अथवा नेदानीं घट इति प्रत्ययोऽत्यन्ताभावविषयोऽस्तु। न *चेदानीमित्यस्यानुपपत्तिः, तस्य नित्यत्वादिति वाच्यम्, त्वन्मतीयप्रागभावस्यापि* तदानीमुत्पत्त्यभावेन तदनुपपत्तेस्तौल्यात्, अनादित्वभङ्गप्रसङ्गाच्च। ध्वंसेऽपसरणे च तथाप्रतीतेश्च।

ननु तर्हि घटोत्पत्तावपि तादृगभावप्रत्ययापत्तिरिति, तन्न, घटवत्ताबुद्धेः प्रतिबन्धकत्वात्। किञ्च घटात्यन्ताभावस्य घटत्वावच्छेदकत्वावच्छिन्नप्रतियोगिताकत्वादेतद्घटात्यन्ताभावस्य तत्रापि सत्वात्, तद्विषयकत्वेनैव तादृशप्रतीत्युपपत्तेर्न तदनुरोधेनातिरिक्ताभावकल्पना युक्ता, गौरवात्।

ननु तर्हि तादृशाभावस्य नित्यत्वाद्घटानुत्पत्तिप्रसङ्ग इति घटान्तरीयात्यन्ताभाव एव। नत्वेतत्, घटात्यन्ताभावस्तत्रेति तस्यैव परिशेषात्सिद्धिः। फलमुखगौरवस्यादुष्टत्वात्। *नच तद्वत्ताबुद्धेस्तदभाववत्ता*बुद्धिप्रतिबन्धकत्वात्तान्निर्वाह इति वाच्यम्। नात्र प्रतीतिमात्रस्यैव वि-

(१) उक्तनियमेत्याद्यारभ्य दृष्टान्तेत्यन्तः पाठः पं० रमानाथ भट्टानां पुस्तके तिरोहितः।

चारः, किन्तूत्पत्तेरपि । एवं सति नित्यं प्रतिबन्धकस्य सत्वेन तदुत्पत्तेरेव वक्तुमशक्यत्वेन तद्वत्ताबुद्धेरेवानुदयात्, अन्यथा वायौ रूपाद्युत्पत्तिप्रसङ्गात्, इति चेत्, न, घटत्वसामानाधिकरण्येन तत्र तदभावग्रहणे घटत्वावच्छेदकावच्छिन्नानां सर्वेषां कार्यत्वेनैवोत्पत्तिमत्तया तदभावस्य त्रैकालिकत्वासिद्धेस्तदत्यन्ताभावासिद्धिप्रसङ्गात् ।

स्यादेतत्, पूर्वं घटाभावद्भूतलमिति बुद्धिस्तत्र च घटे आनीते घटवद्भूतलमिति बुद्धिस्तत्र न तदभावबुद्धिः, तद्बुद्धिप्रतिबध्यत्वात्; तथाच प्रतिबध्यबुद्ध्यन्यथानुपपत्त्यैव तत्सिद्धिर्ध्वस्त इति बुद्ध्यभावान्नध्वंसो विषयः । सत्यम्, किं तत्र तत्सामानाधिकरण्येन तदभावग्रहः किं वा तदवच्छेदेन ? आद्ये यत्किञ्चिद्धटवत्ताबुद्धिप्रसङ्गः । द्वितीयश्चेत् सर्वत्रापि स एवास्तु, कृतं तत्सामानाधिकरण्येन तदभावप्रयासेन । नच तस्य तत्प्रतिबन्धकत्वम् घटरूपेणाविर्भाविवेच्छायामभावग्रहणरूपस्य तिरोधानात्सर्वस्यैव व्यवह्रियमाणत्वात्सर्वव्यवहारार्थमेव तत्प्राकट्यात् । नचैवं विद्वदाभरणेऽनित्यत्वलक्षणेऽसम्भवो दोषः स्यात्, तत्रोभयोस्तयोस्त्वद्रीत्यैव निरूपणेनापि दोषप्रदर्शनात्, वस्तुतोऽभावप्रतियोगित्वं तत्त्वम्, इत्यत्रैव तात्पर्यात्, नचैवं ब्रह्मणोऽनित्यत्वप्रसङ्गस्तयो कार्यधर्मत्वात् ।

प्रकृतमनुसरामः । तथाच धर्माणां मायिकत्वाभावात्सिद्धमप्राकृतधर्मत्वं ब्रह्मणः । अत्रैव हेतुगर्भविशेषणमाह—अशेषोपनिषद्वेद्यमिति । न विद्यते विशेषो यासु ताः, ततः कर्मधारयः, ततस्तत्पुरुषः । सर्वोपनिषत्प्रतिपाद्यमित्यर्थः । अस्य तत्वन्त्वित्थं बोध्यम्—तथाहि—यदिधर्माः प्राकृताः स्युस्तर्हि तद्विशिष्टं ब्रह्मभवेत्, तथासति तत्प्रतिपादकवेदान्तानामब्रह्मपरत्वे "सर्वे वेदा यत्पदम्" इत्यादिवाक्यानि व्याकुप्येरन् । औपनिषदत्वमपि साधारणं स्यात्, अत ईदृशवाक्यान्यथानुपपत्तिरेव विशेषाणामप्राकृतत्वं साधयतीति सुधीभिरवसेयम् ।

अथेयं न दूषणसङ्गतिः, अतात्विकभेदोररीकरणात्, नैवं वक्तुं युक्तम्, तथाहि—अतात्विकत्वं ह्यौपाधिकत्वमायुष्मता वाच्यम्, तत्रोपाधिर्माययैव ( तथा, ) तत्र सा किं सर्वं ब्रह्मव्याप्नोत्युतैकदेशम् ? आद्येऽभिव्याप्तेरेवासम्भवः । परिच्छिन्नएव तत्सम्भवात् । उत्तरे सांशत्वापत्तिः, "असङ्गोह्ययमि"त्यादि विरोधश्च ।

ननु घटावच्छिन्न आकाश इत्याकाशवन्मायावच्छिन्नत्वेऽपि न सांशत्वापत्तिरिति चेत्, मैवम्, वैलक्षण्येन तस्य दृष्टान्तत्वासिद्धेः,

त्वात् ( न सा ) । ननु कथञ्चिद्धायोरपि ग्राह्यत्वं निरूप्यत इति चेत्, न, द्व्यणुकस्य ग्राह्यतापत्तेः । अयोग्यत्वान्नतद्ग्रह इति चेद्त्रापि तथा । महत्त्वाभावनिबन्धनं हि तत्रायोग्यत्वम् । अत्रापि स्पर्शाभावनिबन्धनं समः समाधिः ।

नच सांशत्वे तन्नाशापत्तिरिति वाच्यम । इष्टापत्तेः । अन्यज्ञावच्छेदकं हि व्यवच्छेदकम्, यथा घटत्वं पटाद्यवच्छेदकम् । तथात्रापि घटाद्युपाधिरूपमवच्छेदकं महाकाशादंशिनः स्वानुरूपं स्वरूपाकाशरूपमंशं परिच्छिनत्तीति घटावच्छिन्न आकाश इति प्रत्यय (स्तु) उपपन्नः । ब्रह्मणि तु तथा वक्तुमशक्यत्वात्कथं मायावच्छिन्नतेत्यवधार्यम् ।

किञ्च ब्रह्ममाययोः कः सम्बन्धः ? नतावत्संयोगः । अज(१) संयोगनिषेधात्, संयोगलक्षणाभावाच्च । तयोरन्यतरास्थितेरनाश्रितत्वाद्भयोर्नसमवायः । नापि स्वरूपलक्षणः, विशेषणविशेष्यादिभावाभावेन तस्य वक्तुमशक्यत्वात् । नन्वस्त्येव विशेषणविशेष्यभावोदोषाभावात् । नैवं शक्यं वक्तुम् । तथा भावे ब्रह्मणः सधर्मकत्वापत्तेरेव दोषत्वात् ।

अथ कर्तृत्वादिधर्मवद्विशेष्यत्वमपि मायिकम् इति न तदापत्तिर्वास्तवत्वाभावात् । तथाहि—तत्र मायिकत्वं मायाजन्यत्वं मायासम्बन्धेन प्रतीयमानत्वं वा ? आद्ये ब्रह्मणः सधर्मकत्वापत्तिः, सदैकरसत्वव्याघातश्च । द्वितीयेऽसङ्गश्रुतिविरोधः ।

ननु न ब्रह्मणि मायासम्बन्धं ब्रूमोऽपि तु जीवे । तथाच जीवनिष्ठया तया दोषरूपया विचित्रा धर्माः प्रत्याय्यन्ते, आरक्ताद्युपनेत्रवत्, इति चेत्, न, जीवस्य ब्रह्माभिन्नत्वेन तथा वक्तुमशक्यत्वात्, तादृशोपनेत्रवन्मायायास्तद्धर्मत्वापत्तेश्च । तथाच मायासम्बन्धस्य वक्तुमशक्यत्वेनौपाधिकभेदासम्भवादप्राकृतानेकधर्मवत्तया सर्वोपनिषद्वेद्यत्वं सिद्धम् ब्रह्मण इति दिक् ।

उक्तविशेषणविशिष्टं वस्तु विशेष्यत्वेन निर्दिशति परमिति । सामान्येन परत्वस्येन्द्रियादिष्वपि "इन्द्रियाणिपराण्याहुः" इति वाक्येनोक्तत्वाद् ब्रह्मेति । सर्वेभ्यो यत्परं ब्रह्म तदित्यर्थः। नच ब्रह्मत्वेनैव परत्वे प्राप्ते परपदानर्थक्यमिति वाच्यम्, इन्द्रियादिपरत्वस्य ज्ञेये ब्रह्मण्यपि सत्वात्ततोऽपि परत्वेन सार्थक्यात् । ननु "महतः परमव्यक्तमव्यक्तात्पुरुषः परः, पुरुषान्नपरं किञ्चित् सा काष्ठा सा परा गतिः"इति श्रुत्या "इन्द्रियाणि पराण्याहु"रिति स्मृत्या च ब्रह्मणोऽन्यस्य परत्वाभावात् कथं

(१) अजसंयोग इति पं० रमानाथभट्टानां पुस्तके पाठः स चातीव प्रामाणिक इति प्रतिभाति ।

तत्परत्वमिति चेत्, अत्रोच्यते—उक्तश्रुतिवाक्ये पुरुषपदं न परब्रह्मवाचकम्, किन्तु, अक्षरब्रह्मपरं स्मृतेश्च तदनुयायित्वात्तत्रापि बुद्धिपदत्वेनाक्षरं ब्रह्मैव ज्ञेयम्। नचात्र प्रमाणाभावः "द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च" इति प्रमाणसद्भावात्। तथाच द्वाविमाविति वाक्यानुरोधात् क्षरस्य परत्वासम्भवाच्चाक्षरपरमेव तत्र पुरुषपदम्। "उत्तमः पुरुषस्त्वन्यः" इति परमात्मपदेन तत्पृथक् परब्रह्मनिर्देशाच्च। अन्यच्च "ब्रह्मविदाप्नोतिपरम्" इत्यत्र ज्ञेयाक्षरब्रह्मण एव परस्य पुरुषोत्तमस्यैवाभिधानाच्च। अत्र ब्रह्मेत्यादिपदार्थचतुष्टयविवरणभूतायां "सत्यं ज्ञानमनन्तं ब्रह्म" इत्यृचि ब्रह्मविपश्चिच्छब्दाभ्यां विवृतत्वाच्चेति सङ्क्षेपः। तथा चैतादृशं ब्रह्म वाञ्छितप्रदानेन ते मुदे प्रीतयेऽस्तु इत्याशीर्वचनम्।

इति श्रीगोस्वामिश्रीरघुनाथात्मजव्रजनाथविरचितो
ब्रह्मवादः सम्पूर्णः।



॥ श्रीकृष्णाय नमः ॥

श्रीमद्रामकृष्णभट्टविरचितः

# शुद्धाद्वैतपरिष्कारः ।

शुद्धाद्वैतविचारेण मायावादनिवर्तकान् ।
श्रीमदाचार्यचरणान्प्रणमामि पुनः पुनः ॥ १ ॥

अथ शुद्धाद्वैतस्य किं लक्षणमिति चेत्, "इतरसम्बन्धाऽनवच्छि-

---

श्रीकृष्णाय नमः ।

## अथ शुद्धाद्वैतपरिष्कारतात्पर्यम् ।

श्रीकृष्णचरणद्वन्द्वम्प्रणम्य परमादरात् ।
शुद्धाद्वैतपरिष्कारं विवृणोमि सतां मुदे ॥ १ ॥

अथादौ श्रीमद्रामकृष्णभट्टाः प्रारिप्सितस्य ग्रन्थस्य निर्विघ्नपरिसमाप्तिसिद्ध्यर्थं मङ्गलमाचार्यवर्यचरणवन्दनरूपं निबध्नन्ति—**शुद्धाद्वैतेति** । शुद्धं च तदद्वैतं चेति कर्मधारयाच्छुद्धत्वावच्छिन्नाद्वैतत्वावच्छिन्नयोरभेद उक्तः । एतादृश शुद्धाद्वैतस्य यो विचारस्तेन मायावादनिर्वतकानाचार्यचरणान्प्रणमामीति मुख्योन्वयः । तत्र परमतनिराकरणपूर्वकस्वमतव्यवस्थापनरूपपरीक्षायाः परपक्षनिराकरणप्रधानतया **मायावादनिवर्तकानि**त्याचार्यविशेषणम् । एवं च परेषां शङ्कराचार्यादीनां ये मायावादास्तेषां निराकरणपूर्वकस्वाभिमतशुद्धाद्वैतविचारप्रस्थापनादाचार्यचरणानामतीवश्रैष्ठ्यं व्यज्यते । मायावादनिवर्तकत्वं च 'मायावादविशेष्यकसत्यत्वप्रकारकज्ञाननिष्ठविशेष्यताकाप्रामाण्य प्रकारकज्ञानजनकत्वम् । जनकत्वं चात्र परम्परया प्रयोजकत्वरूपम्, तेन साक्षादजनकत्वेऽपि न दोषः । **प्रणमामीति** । अत्र नमधातोः स्वावधिकोत्कर्षवत्तया ज्ञापनमर्थः, तदेकदेश उत्कर्षे प्रोपसर्गार्थप्रकर्षस्यान्वयः, एवं चाचार्यचरणविशेष्यकस्वावधिकोत्कर्षप्रकारकज्ञानजननानुकूलव्यापारवान्ग्रन्थकार इत्यर्थः । **पुनः पुनरिति** भक्तिदार्ढ्यावबोधनाय ।

**अथ शुद्धाद्वैतस्य किं लक्षणमिति** । षष्ठ्यर्थो निष्ठत्वम्, तथाच शुद्धाद्वैतनिष्ठेतरव्यावृत्तोधर्मो जिज्ञासाविषय इत्यर्थः सर्वत्र किंसमभिव्याहारे जिज्ञासाविषयत्वबोध-

८ जिज्ञासाविषयीभूतं लक्षणं निर्दिशति—**इतरे**त्यादिना । इतरस-

त्नकार्यकारणादिरूपद्वित्वप्रकारकज्ञानप्रतियोगिताकाऽभाववत्त्वम्" इति गृहाण। अत्र हि द्वित्वप्रकारकज्ञानप्रतियोगिताकाभाववत्त्वमित्यनेनैवेतर-सम्बन्धानवच्छिन्नत्वप्रतीतेरनवच्छिन्नान्तविशेषणस्य किम्प्रयोजनमिति चेत्, सत्यम्, कार्यकारणादिद्वित्वप्रकारकपदार्थस्य मायिकत्वाभावाय तद्विशेषणम्। शङ्कराचार्याणां मते मायाऽविद्योपाध्यवच्छिन्नेश्वरजीवादिरूपकारणकार्ययोरशुद्धत्वात्। अन्यथा तेषां मते कार्यकारणयोः शुद्धत्वे द्वैताऽऽपत्तिः। अत एव स्वरूपलक्षणे सत्यादिपदलक्ष्यमेव ब्रह्म। "सर्वत्रैव हि वाक्यार्थो लक्ष्य एवेति च स्थित" इत्युक्तेः।

तत्रापि वदामः। लक्षणायाः शक्यसम्बन्धरूपत्वात्तस्य च द्विनिष्ठ-

---

म्बन्धावच्छिन्नत्वाभाववद्यत्कार्यकारणादिरूपद्वित्वप्रकारकज्ञानं तत्प्रतियोगिताकाभाववत्त्वमित्यर्थः। अत्र च लक्षणे व्यावृत्त्यादिकं स्वयमेवाग्रे वक्ष्यत एवेति नात्र विस्तरः क्रियते।

इतरसम्बन्धानवच्छिन्नेत्यस्यसार्थक्यमाह—अत्र हीति। एतल्लक्षणघटकमित्यर्थः। अनवच्छिन्नान्तानुपादाने शाङ्करमतप्रवेशापत्तिः, तन्मते मायासम्बन्धमादाय तादृशद्वित्वप्रकारकज्ञानाभावसत्वादतोऽवच्छिन्नान्तमित्याह—सत्यमित्यादिना। प्रकृतविषयोपयोगिशङ्कराचार्यमतं सङ्क्षेपेणाह—शङ्कराचार्याणामिति। तन्मते मायोपाध्यवच्छिन्नस्येश्वरस्याविद्योपाध्यवच्छिन्नजीवतोऽभेदादित्यर्थः। अत्र चाशुद्धत्वं मायाविद्योपाध्यवच्छिन्नत्वम्, तदनवच्छिन्नत्वं च शुद्धत्वमिति निष्कर्षः। एतादृशाशुद्धत्वानङ्गीकारे तन्मते दोषं प्रदर्शयन्ति—अन्यथेति। तन्मत एतादृशाशुद्धत्वानङ्गीकार इत्यर्थः। उपाध्यवच्छिन्नत्वाङ्गीकारे तदवच्छिन्नत्वप्रयुक्तोऽभेदः स्वीकर्तुं शक्यते। तदनवच्छिन्नत्वे तु परस्परभिन्नजीवत्वेश्वरत्वरूपधर्मावच्छिन्नत्वापत्त्या शङ्कराचार्यस्य द्वैतवादित्वापत्तेः। एवं चैतादृशापत्तिवारणार्थं निरुक्तमेवाशुद्धत्वं तन्मते स्वीकरणीयम्। अत्रैवोपोद्बलकमाह—अतएवेति। स्वरूपलक्षणे ब्रह्मस्वरूपलक्षण इत्यर्थः। "सत्यं ज्ञानमनन्त"—मित्यादि ब्रह्मस्वरूपलक्षणपरवाक्यघटकसत्यादिपदैः शक्त्या न ब्रह्म बोध्यते, किन्तु लक्षणयैव, अन्यथा सत्यत्वनिष्ठप्रकारतानिरूपितविशेष्यताकबोधापत्त्या पराभिमतं धर्मसामान्याभाववद्ब्रह्म न सिद्ध्येदित्यर्थः।

अथ शङ्कराचार्यमते सत्यमित्यादिपदलक्ष्यत्वमपि ब्रह्मणो न सम्भवतीतिप्रतिपादनायाह—तत्रापि वदाम इति। शङ्कराचार्यस्वीकृतलक्षणापक्षो बहुदोषदुष्ट इति ब्रूम इत्यर्थः। नच लक्षणनिरूपणप्रस्तावे परमतखण्डनमसङ्गतमिति वाच्यम्, लक्ष्यनिश्चयं विना लक्षणायोगाल्लक्ष्यतावच्छेदकीभूतधर्माश्रयब्रह्मस्वरूपावधारणस्यात्यन्तमपेक्षितत्वादिति दिक्।

त्वाद्ब्रह्मणि सत्त्वेन वान्ताशित्वापत्तिः । अथ च सम्बन्धस्यापि मायिकत्वमिति चेत्, लक्ष्यत्वरूपधर्मवत्त्वेन दोषस्तदवस्थः । लक्ष्यत्वमपि तथैव मायिकं चेत्, भद्रं लक्षणावैयर्थ्यम् । किञ्च लक्ष्यस्य तीरस्यागङ्गात्ववत्सत्यादिलक्ष्यस्यासत्यत्वादित्वापातः । उपाधिवादस्य च श्रीमदाचार्यचरणादिभिः खण्डितत्वान्नेह तन्यते ।

अथ च "सम्भवव्यभिचाराभ्यां स्याद्विशेषणमर्थवत्" इतिन्यायेन विशेषणस्येतरभेदकत्वेन मायासम्बन्धा(राहित्या)भावादेवव्यावर्त्याभावादपार्थ-

---

वृत्तित्वादुभयान्तर्गतब्रह्मवृत्तित्वमपिप्राप्तमिति । वान्ताशित्वापत्तिः । वान्तस्य परित्यक्तस्य सधर्मकत्वस्य लक्षणापक्षेऽपि पुनः स्वीकारापत्तिरित्यत्यन्तं जघन्यो दोषः परपक्षे स्थित इत्यर्थः । अयं भावः—तत्पदशक्यतावच्छेदकधर्मवत्वस्य शक्ये नियमात्सत्यपदशक्यत्वे ब्रह्मणोऽपि सत्यत्वावच्छिन्नत्वापत्त्या तत्परिहारार्थं लक्षणापक्षः स्वीकृतः शङ्कराचार्यैः परं गौरवग्रस्तलक्षणापक्षेऽपि न तद्दोषनिरासः सम्भवति, लक्षणायाः सम्बन्धरूपत्वेन द्वित्वावच्छिन्नाधिकरणताकत्वाद्ब्रह्मणोऽपि तादृशसम्बन्धवत्वापत्त्या न निर्धर्मकत्वं सिद्धमिति भक्षितेऽपि लशुने न शान्तोव्याधिरित्यादिकं बहुतरमूहनीयम् ।

ननु भवतु शक्यसम्बन्धरूपत्वं लक्षणायास्तथापि न दोषः, मायिकसम्बन्धस्य ब्रह्मणि स्वीकारात्, एवं च तस्यावास्तविकत्वान्न सधर्मकत्वं ब्रह्मण इत्याशङ्कते—अथ च सम्बन्धस्येति । अत्रोत्तरमाह—लक्ष्यत्वेति । एवं च लक्ष्यत्वनिष्ठप्रकारतानिरूपितप्रमीयविशेष्यतावत्वाद्ब्रह्मणः सधर्मकत्वापत्तिस्तदवस्थेति भावः । पुनः शङ्कते—लक्ष्यत्वमपीति एवं च मायिकलक्ष्यत्वरूपधर्मवत्वान्न ब्रह्मणः सधर्मकत्वापित्तिरित्यर्थः । अत्राप्युत्तरमाह—भद्रमिति । अयमभिप्रायः किम्मायिकत्वम् ? सत्यत्वमसत्यत्वं वा ? आद्ये लक्ष्यत्वरूपसत्यधर्मावच्छिन्नत्वापत्त्या नाधर्मकत्वम् । द्वितीये वदतोव्याघातः । ब्रह्मणो लक्ष्यत्वमस्ति नास्तीति चेति । दूषणान्तरमप्याह—किञ्चेति । लक्ष्यस्येत्यादि । लक्ष्यताविशिष्टस्य हि शक्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकभेदवद्धर्मावच्छिन्नत्वनियमेन ब्रह्मणोऽपि सत्यत्वप्रतियोगिकभेदवदसत्यत्वरूपधर्मवाच्छिन्नत्वापत्तिः । तथा च सुतरां व्याघात इत्यर्थः । एवमभ्युपगमवादेन मतखण्डनं सम्पाद्येदानीमुपाधिवादे दोषमुद्भावयति—उपाधिवादस्येति । श्रीमदाचार्यचरणैस्तथा तदन्वयजैः श्रीव्रजनाथचरणैश्च सुबहुलं विचारितत्वान्नात्र विचारः क्रियत इत्यर्थः ।

स्वमतेऽनवच्छिन्नान्तदलसार्थक्यप्रदर्शनार्थमाह—अथ चेति । अयं भावः—लक्षणं हि लक्ष्यतावच्छेदकावच्छिन्नविशेष्यकलक्ष्यप्रतियोगिकभेदवत्प्रतियोगिकभेदत्वावच्छिन्नविधेयताकानुमितिजनकत्वाद्धेतुस्वरूपं भवति, तद्घटकानां च पदानां हेतुघटकत्वेन व्यभिचारवारकतयैव सार्थक्यमिति । एवं च स्वमते ब्रह्मणि मायासम्बन्धाप्रसिद्ध्या तद-

मिदं विशेषणमिति चेत्, न, दत्तोत्तरत्वात्। बोधाय निरूपणीयत्वेनेतरमतजन्यज्ञानस्य निरसनीयत्वात्।

किञ्च सन्ध्याधिकरणानुरोधेन स्वाप्निकसृष्टेर्मायिकत्वेन तद्व्यावृत्त्यर्थं वा तत्। स्वाप्नसृष्टेरवास्तविकत्वेनास्याः सृष्टेश्च वास्तविकत्वेन भेदो "वैधर्म्याच्च न स्वप्नादिवदि"तिसूत्रादिभिर्व्यासचरणैरेव प्रतिपादितः। सम्बन्ध इतरत्वविशेषणं तु ब्रह्मणो धर्मधर्मिभावसम्बन्धावच्छिन्नतया तस्यापि निरासे शङ्करमतप्रवेशवारणाय। तर्हि धर्मधर्मिभावसम्बन्धाङ्गीकारे द्वित्वप्रकारकज्ञानप्रतियोगिताकाभावाभावादव्याप्तिरिति चेत्, धर्मधर्मिभावस्या-

---

नवच्छिन्नत्वविशेषणमनर्थकमिति शङ्कातात्पर्यम्। अत्रोत्तरमाह—**दत्तोत्तरत्वादि**ति। पूर्वमित्यादिः, तथाच "कार्यकारणादिद्वित्वप्रकारकपदार्थस्य मायिकत्वाभावाये"त्यादिपूर्वग्रन्थ एवैतद्दल प्रयोजनमुक्तमित्यर्थः। एतदेवाह—**बोधाये**ति। तथाच पराभिमतनिरासार्थमेव तद्विशेषणमिति सिद्धम्।

स्वमतेऽपि स्वप्नसृष्टेर्मायिकत्वस्य प्रसिद्धत्वेन तदनुसृत्यापि प्रथमदलसार्थक्यमाह—**किञ्चे**ति। **सन्ध्याधिकरणानुरोधेने**ति। तृतीयाध्याये द्वितीयपादे प्रथमाधिकरण इत्यर्थः। तत्र हि "मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात्" इति सूत्रे मायामात्रं स्वप्नप्रपञ्च इत्युक्तत्वात्। स्वाप्नसृष्टेः सद्भिन्नत्वं सूत्रान्तरेणापि प्रदर्शयति— "**वैधर्म्याच्च न स्वप्नादिवदि**"ति। द्वितीयाध्याये द्वितीयपादे एतत्सूत्रम्। तत्रच स्वप्नसृष्टेः वैधर्म्यसिद्धिरिति स्वप्नसृष्टेः सद्भिन्नत्वं सूत्रकारसम्मतमित्यवश्यमेव स्वीकर्तव्यम्। इतरसम्बन्धानवच्छिन्नेत्यत्रेतरपदसार्थक्यमाह—**सम्बन्ध इ**ति। तथाच शङ्करमते ब्रह्मणः सम्बन्धमात्रानवच्छिन्नत्वात्तन्मतनिराकरणायेतरपदमितिभावः।

स्वमते धर्मधर्मिभावसम्बन्धस्य स्वीकारात्सम्बन्धस्य च द्वित्वावच्छिन्नसंम्बन्धिताकत्वात् कथं द्वित्वनिष्ठप्रकारताकज्ञानाभाववत्त्वमित्याशङ्कते—**तर्ही**ति। **अव्याप्ति**रिति। नन्वसम्भव इति कस्मान्नोच्यते? लक्ष्यस्यैकत्वावच्छिन्नत्वात्तद्वृत्तित्वे लक्ष्यतावच्छेदकव्यापकाभावप्रतियोगितावच्छेदकावच्छिन्नत्वरूपासम्भवस्यैव वक्तुं योग्यत्वादिति चेत्, सत्यम्, तदभिप्रायेणैवाव्याप्त्यभिधानात्। दोषमुद्धरति—**धर्मधर्मी**ति। तथा च धर्मधर्मिणोरभेदेनैक्याद्द्वित्वनिष्ठप्रकारताकज्ञानाभाववत्त्वमुपपन्नमित्यर्थः। नन्वेवमभेदाङ्गीकारे धर्मधर्मिभावस्य सम्बन्धत्वानुपपत्तिः, सम्बन्धत्वस्य द्वित्वावच्छिन्ननिरूपकतानिरूपितनिरूप्यत्ववद्वृत्तिताकत्वव्याप्यत्वनियमादिति चेत्, न, सम्बन्धस्याभेदरूपस्य स्वीकृतत्वात्। तथाचेतरेषां संयोगसमवायादीनां द्विनिष्ठत्वेऽपि तद्विलक्षणत्वादस्य सम्बन्धस्यैकनिष्ठत्वेन न

भिन्नत्वस्य "प्रकाशाश्रयवद्वा तेजस्त्वात्" इत्यादिसूत्रैर्निर्णीतत्वात् । "परास्य शक्तिः" इत्यादिष्वभेद एव षष्ठ्यङ्गीकारात् ।

एतेन भेदाभेदवादिनौ निम्बार्कभास्कराचार्यौ प्रत्युक्तौ । तत्राद्यस्य वास्तविकभेदाभेदत्वेन मध्वाचार्यस्यैव भेदस्य वास्तविकतया द्विप्रकारके-त्यादिना निरस्तत्वात् । द्वितीयस्य तु—औपाधिकभेदाभेदेन भेदस्यौपाधिक-त्वेनेतरसम्बन्धेनेत्यादिना व्यावर्तितत्वात् । तर्हि अवच्छिन्नान्तमेव तदिति चेत्, शङ्करमतापत्तिः; अतः कार्यादीति ।

तर्हि रामानुजाचार्यमतेऽपि मायासम्बन्धाभाववत्कार्यकारणयोरद्वैत-तया तन्मतप्रवेश इति चेत्, शृणु, तन्मते हि चिदचिद्विशिष्टस्य सूक्ष्मस्य स्थूलस्य कारणस्य कार्यस्य च सत्वेन स्वमते "आत्मैवेदमग्रआसीदि"-त्यादिश्रुत्याऽचितः कारणावस्थायां निषेधात् केवलात्मनः कारणतया, ततो

---

रणाय सूत्रमुपन्यस्यति—प्रकाशेति । तृतीयाध्यायद्वितीयपादे नवमाधिकरणस्थमादिमं सूत्रमिदम् । अस्यायमर्थः—यथा प्रकाशाश्रयाः सूर्यादयः प्रकाशादभिन्नाः पृथक्स्थि-त्यभावात्तथैव ब्रह्मधर्माणामपि ब्रह्माभिन्नत्वेऽपि ब्रह्मधर्मत्वमुपपद्यत एवेति । प्रमाणान्तर-मप्याह—परास्यशक्तिरित्यादीति ।

एवं सङ्क्षेपेण शङ्कराचार्यमतं खण्डयित्वाऽधुना निम्बार्कभास्कराचार्यमतप्रवेशानापत्तिं दर्शयत्येतेनेति । वक्ष्यमाण दोषेणेत्यर्थः । अत्रेदं तात्पर्यम्—मध्वमते भेद एव वास्त-विकः, निम्बार्कमते भेदाभेदावुभयावपि वास्तवाविति तन्मते द्वित्वप्रकारकज्ञानस्यैव सत्वेन द्वित्वप्रकारकज्ञानप्रतियोगिताकाभावाभावाच्च तन्मतप्रवेशापत्तिरिति । भास्कराचार्यमत-निराकरणं दर्शयति—द्वितीयेति । व्यावर्तितत्वादित्यग्रिमेणान्वितम् । तन्मते भेदाभेद-स्यौपाधिकत्वेनेतरसम्बन्धानवच्छिन्नत्वाभावान्नातिव्याप्तिरिति भावः । पदव्यावृत्तिपरि-शोधनार्थं पुनः शङ्कते—तर्हि अवच्छिन्नान्तमेवेति । एवं च कार्यकारणरूपेत्यादि-पदवैयर्थ्यमित्यर्थः । अत्रोत्तरमाह—शङ्करेति । शङ्करमतप्रवेशापत्तिरित्यर्थः । एतादृ-शापत्तिवारणार्थमेवोक्तपदसार्थक्यान्नवैयर्थ्यमित्याह—अतः कार्यादीतीति ।

रामानुजमतप्रवेशापत्तिमाशङ्कते—तर्हीति । उत्तरमाह—शृण्विति । उत्तरं शृण्वि-त्यर्थः । रामानुजमतस्यातीवविलक्षणत्वेन तन्मतप्रवेशापत्तिर्न शङ्कास्पदापीति सूचयितुं स्वमताद्रामानुजमतभेदं स्पष्टयति—तन्मते हीति । "आत्मैवेदमग्र आसीदि"तिश्रुति-प्रतिपादितं चिद्भिन्नस्याकारणत्वं परेषामसम्मतम्, तथैव कार्यावस्थायां तैर्भेदः स्वीक्रियते । अस्माभिश्चाभेदः "नेहनानास्ति किञ्चने"तिश्रुतिप्रमाणको निर्धार्यत इत्याह—चिदचिदि-

वैलक्षण्यम्, कार्यावस्थायामपि तेषां मते परस्परभेदस्य वास्तविकत्वेन स्वमते अभेदस्य वास्तविकत्वेनापि वैलक्षण्यम्। न च घटपटादीनामभेदो न सम्भवतीति वाच्यम्, सर्वेषां ब्रह्मोपादानस्यैकत्वेन तस्यैवावस्थान्तरत्वेन चाभेदात्। यथा सुप्त उत्थित उपविष्टे च पुरुषेऽवस्थाभेदेऽपि न पुरुषभेदः।

किञ्च इतरसम्बन्धानवच्छिन्नत्वेनाचितो वास्तविकभिन्नचितश्च निरासेन न तत्राविव्याप्तिः।

किञ्च विशिष्टाद्वैतमित्यस्य विशेषणविशिष्टत्वेन विशेषणस्य चेतरव्यावर्तकत्वेन सम्भवोऽपेक्षितोऽत्र व्यावर्त्याभावतया वैशिष्ट्यकथनं

---

स्यादिवैलक्षण्यमित्यन्तेन। युक्तञ्चैतत्कथमन्यथा "यदेवेह तदमुत्रयदमुत्र तदन्विह" "मृत्योः स मृत्युं गच्छति य इह नानेव पश्यती"त्यादि श्रुतिवाक्यसङ्गतिः?

स्वमतेऽभेदं स्पष्टयितुमाशङ्कते—**न चेति**। वाच्यमित्यन्वयः। अयमभिप्रायः—घटो न पटः, पटो न घटः, द्रव्यं न गुणः, गुणो न द्रव्यमित्यादिप्रतीतिसिद्धः परस्परं घटादीनां भेदो नञस्तदर्थकत्वात्। नचात्र नञो न भेदार्थकत्वम्, किन्त्वत्यन्ताभावपरत्वमेवेति न दोष इति वाच्यम्, नञोऽत्यन्ताभावाबोधकत्वात्। न च भूतले न घट इत्यादिप्रत्यये भूतलनिष्ठाभावप्रतियोगित्वादिबोधानुरोधादत्यन्ताभाव एव नञोऽर्थ इति वाच्यम्, सप्तमीसमभिव्याहाराद्धितत्रात्यन्ताभावबोधकत्वम्; यत्र तु प्रतियोग्यनुयोगिवाचकपदयोः समानविभक्तिकत्वम्, तत्र भेदबोधकत्वमेव। समानविभक्तिकप्रतियोग्यनुयोगिवाचकपदसमभिव्याहृतनञो भेदबोधकत्वनियमात्। तथाच घटो न पट इत्यत्राप्यव्यवहितपूर्वत्वसम्बन्धेन प्रथमाविशिष्टघटपटपदसमभिव्याहृतनञो भेदबोधकत्वस्याऽऽनुभविकत्वेन कथमभेदः शक्यते वक्तुमित्याशङ्कातात्पर्यम्।

अत्रोत्तरमाह—**सर्वेषामिति**। तथाच प्रतीतितो भेदसिद्धावपि कारणैक्यादस्त्येवैक्यमित्यर्थः। **ब्रह्मोपादानस्येति**। ब्रह्माभिन्नोपादानकारणस्येत्यर्थः। **एकत्वेन**, अभिन्नत्वेन। **अभेदात्**, कार्यस्याप्यभेद एवेति न कुत्रापि भेदसिद्धिरित्यभिप्रायः। ननु तथापि कपालं न घटः, घटो न कपालमित्यादिप्रतीत्या कार्यकारणयोर्भेदस्वीकारात्कथं ब्रह्मकारणकस्यापि जगतो ब्रह्माभिन्नत्वम्, कथं च तदनुरोधेनैक्यमिति चेत्, न, कार्यस्य कारणाभिन्नत्वात्। तथाच यथा कटककुण्डलाद्यनेकमपि कार्यजातं कारणभूतसुवर्णादभिन्नं तथैव जगतोऽपि ब्रह्माभिन्नत्वं तदनुरोधेन चैक्यं सिद्ध्यत्येवेत्यलं पल्लवितेन।

विशिष्टाद्वैतमते दोषान्तरमुद्भावयति—**किञ्चेति**। **इतरव्यावर्तकत्वेन सम्भव**

नोपपद्यत इति । एतेन शैवोऽपि दत्तोत्तरः ।

भिक्षुस्त्वविभागाद्वैतवादमवलम्ब्यौपाधिककर्तृत्वादिकमङ्गीचकार, तदपीतरसम्बन्धानवच्छिन्नाभावत्वेन निरस्तम् । द्वित्वप्रकारकाद्यभावत्वान्तेन मध्वाचार्यमतस्य निरासः । लीलास्थभावस्य वाधाभावाय कार्यकारणादिरूपमिति ज्ञानस्य विशेषणम् । द्वित्वप्रकारकप्रतियोगिताकाभावस्य मायावादमतेऽपीष्टत्वात्, तन्निवारणाय ज्ञानस्येति प्रतियोगिनि विशेषणमिति सुष्ठु ।

अत्र शुद्धाद्वैतपदे कोऽसौ समास इति चेत्, शुद्धञ्च तदद्वैतञ्चेति कर्मधारयः । अन्येतरसम्बन्धानवच्छिन्नत्वे सतीत्येवं योज्यम् । उक्त लक्षणं तु शुद्धयोः कार्यकारणयोरिति षष्ठीतत्पुरुषपक्षे बोध्यम् ।

अत्र नरसिंहतापिन्यां योनित्वं ब्रह्मणः समर्थयित्वा "सर्वं सर्वमयं सर्वे जीवाः सर्वमयाः सर्वावस्थासु तथाप्यरूपा" इत्याद्युक्त्वा, "सन्मात्रो नित्यः शुद्धो बद्धः सत्यो मुक्तो निरञ्जनो विभुरद्वय आनन्दः परः प्रत्यगेकरसः प्रमाणैरेतैरवगम्यते" इति वाक्यं पठितम् । अग्रे च "सर्वमत एव शुद्धोऽबाध्यस्वरूपः सुखरूप आत्मे"ति निरूपितम् । "सर्वं

---

षणानां सार्थक्यमिति पूर्वोक्तोर्थः पर्यवसितः । **एतेनेति** । उक्तदोषादेवेत्यर्थः । **शैवोऽपीति** । रामानुजमततस्करत्वादित्यर्थः । तदुक्तं गिरिधरचरणैः—"शैवोप्येतेन विध्वस्तो यतस्तस्कर एवहि"ति शुद्धाद्वैतमार्तण्डे । अपिना कापालिकादिपरिग्रहः । **दत्तोत्तरः** खण्डितमत इत्यर्थः ।

भिक्षुमतं खण्डयितुमुपन्यस्यति—**भिक्षुस्त्विति** । विज्ञानभिक्षुरित्यर्थः । पूर्वोक्तमेव पदसार्थक्यं प्रकारान्तरेण द्रढयति—**तदपी**त्यादिग्रन्थेन । एतस्यार्थः प्रागेवप्रपञ्चितोऽस्माभिरिति नात्र विस्तरः क्रियते । ज्ञानपदसार्थक्यमाह—**द्वित्वेति** । तथाच मायावादप्रवेशापत्तिवारणार्थमेव ज्ञानपदमिति भावः ।

शुद्धाद्वैतपदसमासं व्याकुरुते—**अत्रेति** । **कोऽसौ समास** इति । किन्नामधेयक इत्यर्थः । लक्षणं तु न कर्मधारयमभिप्रेत्य, किन्तु षष्ठीतत्पुरुषमभिप्रेत्यैवेत्याह—**उक्तलक्षणं त्विति** ।

श्रणं प्रतिपाद्येदानीमस्य सर्वोत्कृष्टत्वप्रदर्शनार्थं तत्रैव स-

खल्विदं ब्रह्मे''त्यादि श्रुतिषु शुद्धाद्वैतं स्पष्टमेव प्रतीयत इति बोध्यम् । विस्तरस्तु मत्कृतशुद्धाद्वैतमार्तण्डप्रकाशे बोध्यः ।

श्रीमद्गिरिधराधीशपादाम्बुजपरागभृत् ।
व्यलिखद्रामकृष्णोऽसौ शुद्धाद्वैतपरिष्कृतिम् ॥

इति श्रीरामकृष्णभट्टविरचिता शुद्धाद्वैतपरिष्कृतिः समाप्ता ।

---

तासां श्रुतीनां पर्यवसायित्वं दर्शयति—अत्रेति । शुद्धाद्वैतं स्पष्टमेव प्रतीयत इति । तथाच प्रमाणशिरोमणिश्रुतिप्रतिपादितत्वाच्छुद्धाद्वैतमतस्य सर्वोत्कृष्टत्वमिति तात्पर्यम् ।

शुद्धाद्वैतपरिष्कारतात्पर्यमुपवर्णितम् ।
रघुनाथेन गोपालपदयोरर्पितं मुदा ॥

इति श्रीम'त्कोकजे'इत्युपाह्व-तर्कतीर्थ-रघुनाथशास्त्रिविरचितं शुद्धाद्वैतपरिष्कारतात्पर्यं समाप्तिमगाणीत् ।



श्रीकृष्णाय नमः ।

गोस्वामी श्रीहरिरायमहाप्रभु विरचित

# ब्रह्मवाद



गोस्वामी श्रीहरिरायमहाप्रभु अन्य मतावलम्बियों का सन्देह दूर करते हुए शुद्धाद्वैतपदवाच्य स्वमत सिद्धान्त का निज जनों को बोध कराने के लिये सयुक्तिक विचार आरम्भ करते हैं—

"अब यह विचार किया जाता है, कि भक्तिमार्ग में कारण रूप जो माहात्म्य ज्ञान है, उसको उत्पन्न करने वाला और भक्ति-प्रेम की दृढ़ता में अनुकूल जो ब्रह्मवाद कहा गया है वह ब्रह्मवाद क्या है?"

उपर्युक्त वाक्य में भक्तिमार्ग, कारण, माहात्म्यज्ञान और अनुकूल आदि शब्दों का प्रयोग है, अतः इन शब्दों का निरुक्ति भी आवश्यक है। पण्डितवर गोपालकृष्ण भट्टजी ने इन शब्दों पर अच्छा प्रकाश डाला है। सब से प्रथम "भक्ति मार्ग" इस शब्द पर विचार किया गया है।

## "भक्ति" मार्ग क्यों है ?

श्रीहरिरायजी ने "भक्तिमार्ग" का कारण माहात्म्य ज्ञान के बताया है। अब सब से पहिले यह विचार करना चाहिये भक्ति को मार्ग क्यों कहा ? मार्ग शब्द का यौगिक अर्थ है जिसके द्वारा (श्रवणादि नवधा भक्ति के द्वारा) श्रीपूर्णपुरुषोत्तम को ढूंढा जाय *वह मार्ग। अर्थात् श्रवणादि साधनानुष्ठानात्मिका भक्ति, मार्ग है।

पुष्टिमार्ग में साधन तथा साध्य को अभिन्न माना गया है और यहां श्रवणादि को साधन कहा है, अतः पुष्टि मार्ग की उपपत्ति (सिद्धि) नहीं होगी ऐसी शङ्का नहीं करना चाहिये, क्योंकि साधन और साध्य पुष्टि मार्ग में एक ही है, श्रवणादि भी भक्ति है और उससे प्राप्त होने वाली फलात्मिका "परा भक्ति" भी भक्ति ही है, अत एव दोनों अभिन्न हैं। भक्ति-प्रेम श्रवणादि साधन और परा फलात्मिका भक्ति उभयत्र अनुस्यूत है। इसका विवरण आगे चल कर किया जायगा। यहां हमको भक्ति किस पदार्थ का नाम है यह जान लेना उचित मालूम होता है। जिस प्रकार "भक्ति मार्ग" शब्द का प्रयोग

---

* मृग्यते पुरुषोत्तमोऽनेनेति मार्गः।

किया जाता है, उसी प्रकार "भक्तिरस" शब्द का भी प्रयोग लोक में प्रसिद्ध है।

## भक्ति का रसत्व

"स्थायी भाव को रस कहते हैं(१)" इत्यादि वाक्यों में स्थायी भाव को रस कहा है। देवादि विषया रति को भाव कहते हैं। अर्थात् विभावानुभावव्यभिचारिसात्विकादि भावों से अनुनीयमान माहात्म्य-ज्ञान पूर्वक स्नेह रसरूपी होने के कारण भक्ति भी रस है। स्नेह यदि माहात्म्य ज्ञान पूर्वक हो तो उसको ही भक्तिरस कह सकते हैं, न कि लौकिक स्नेह को। नारदपञ्चरात्र में कहा है कि "माहात्म्य-ज्ञान पूर्वक सुदृढ और सर्वतः अधिक जो स्नेह है, वही भक्ति है, उसी (भक्ति) से मुक्ति प्राप्त होती है भक्ति के बिना मुक्ति नहीं मिलती(२)"

"जो ईश्वर में अनुरक्ति है वह परा भक्ति है(३)" ऐसा शाण्डिल्य महर्षि ने भक्ति सूत्रों में कहा है। परा भक्ति का अर्थ "फल की आकाङ्क्षा के बिना जो ईश्वर में प्रेम होता है वह परा भक्ति है(४)" ऐसा होता है। भक्ति रस अन्य रसों का उपलक्षक (Designation) है। रसों में शृङ्गार रस प्रधान होने से वही अभीष्ट है; क्योंकि शृङ्गार रस के अन्तर्गत ही अन्य रस हैं। यदि ऐसा न होता तो "रस को प्राप्त करके आनन्द युक्त होता है (५)" इत्यादि श्रुति वाक्यों में रसप्राप्ति का फल आनन्द के कहा है; भयानकादि रसों का फल आनन्द नहीं है, यदि उनको शृङ्गार रस के अन्तर्गत न माना जाय तो उनको रस ही नहीं कह सकेंगे, अतः यह मानना चाहिये कि शृङ्गार रस में ही अन्य रसों का अन्तर्भाव हो जाता है। "वह रस रूप है (६)" "वह सर्व रस है" इत्यादि श्रुति वाक्यों से ज्ञात होता है कि शृङ्गाररसरूप पुरुषोत्तमविषयकज्ञान पूर्वक, स्नेह विषयक यह मार्ग है। यह मार्ग है न कि सरणि। जैसे राज मार्ग से गमनादि सौकर्य और चोरादि का भय नहीं होता है वैसेही भक्ति मार्ग में अत्यन्त आयास (प्रयत्न) साध्य शमदमादि साधन

---

(१) स्थायीभावो रसः स्मृतः। रतिर्देवादिविषया भाव इत्यभिधीयते। श्रुतत्वाल्लोकसिद्धत्वादनुभूतेश्च भेदतः। तेभ्योऽतिरिक्तो मन्तव्यः साङ्गो भक्तिरसो बुधैः॥ इत्यादि वाक्यों में भक्तिरस का वर्णन किया गया है, जिनको विशेष जिज्ञासा हो उनको "भक्ति रसत्व वाद" पढना चाहिये।

(२) माहात्म्यज्ञानपूर्वस्तु सुदृढः सर्वतोऽधिकः। स्नेहो भक्तिरिति प्रोक्तस्तया मुक्तिर्नचान्यथा॥

(३) सा परानुरक्तिरीश्वरे। (४) फलाभिसन्धिरहिता परा।

अप्रयोजक है । इसीलिये यह भक्तिमार्ग अनायाससाध्य कहा जाता है । अर्थात् इस मार्ग से गमन करने वालों को शमादि की कठोर परीक्षा से मुक्त समझा जाता है । श्रीमद्भागवत में कहा है कि-हे (१)माधव तुम्हारे साथ जिनका सुहृद्भाव है, ऐसे भक्त, मार्ग से गिरते नहीं है, तुम्हारे द्वारा रक्षित होकर निर्भय रूप से विचरते हैं । एकादश स्कन्ध में कहा है कि जिस(२) मार्ग से गमन करते हुए कभी प्रमाद ( धोखा ) नहीं होता है, आँखे मूँद कर तथा दौड़ते हुए गमन करने पर भी न कहीं फिसलने का भय है न गिरने का। इसी कारण श्रीमदाचार्यचरण भी तत्वदीपनिबन्ध के भक्ति प्रकरण में कहते हैं कि-(३)यदि भक्तसे किसी समय इस भक्ति मार्ग में रहते हुए(४)वेदनिन्दा हो जाय अथवा अधर्म हो जाय तो वह नरक में नहीं गिरता है, किन्तु हीन योनि में उत्पन्न होता है । भक्तिमार्ग में प्रथम से लेकर अवधि पर्यन्त दुःख से असम्भिन्न ( रहित ) सुख ही है यह सिद्धान्त हुआ ।

## भक्ति शब्द का यौगिक अर्थ ।

"भज् सेवायाम्" इस धातु से "क्तिन्" प्रत्यय करने पर "भक्ति" ऐसा शब्द सिद्ध होता है । यहां प्रकृति भज् है और क्तिन् प्रत्यय है, वह क्रियासामान्य अर्थ को कहता है । वैयाकरणों का नियम है कि प्रकृति और प्रत्यय दोनों मिलकर एक ही अर्थ को कहते हैं । यहां धात्वर्थ से सूचित प्रधानभूता क्रिया है, उसका प्रत्यय में पर्यवसान होगा, तब जो प्रधानभूता क्रिया मानसी सेवा है, वही "भक्ति" शब्द का अर्थ होगा । "मेरा(५) मन अन्यत्र होने से मैंने सुना नहीं, अन्यत्र मन होने से मैंने देखा नहीं" इत्यादि वाजसनेय श्रुति के वाक्यों से ज्ञात

( १ ) तथा न ते माधव तावकाः क्वचिद्भ्रश्यन्ति मार्गात्त्वयि बद्धसौहृदाः । त्वयाभिगुप्ता विचरन्ति निर्भया विनायकानीकपमूर्धसु प्रभो ॥

( २ ) यानास्थाय नरो राजन् न प्रमाद्येत कर्हिचित् । धावन्निमील्य वा नेत्रे न स्खलेन्न पतेदिह ॥

( ३ ) अत्रापि वेदनिन्दायामधर्मकरणात्तथा । नरके न भवेत्पातः किन्तु हीनेषु जायते ।

( ४ ) भगवद्भक्त वेदकी निन्दा वा अधर्म करही नहीं सकता, यदि कदाचित् प्रसङ्ग वश ऐसा हो जाय, तो उसको हीन योनि में जन्म लेना पडता है । यह दण्ड भी कुछ कम नहीं है, क्योंकि हीन योनि में उसको भगवत्प्रेम से वञ्चित रखनेवाली सामग्री प्रचुर प्रमाण में प्राप्त होती है । जो लोग भक्त नहीं हैं पर भक्तहोने का आडम्बर कर अधर्म करते हैं वे अवश्य ही नरक में वास करेंगे । यही आचार्य चरणों का आशय समझना चाहिये ।

( ५ ) अन्यत्रमना अभूवं नाश्रौषम्, अन्यत्रमना अभूवम् नादर्शम् ।

